विकृतैः[1] पाणि-पादाद्यैर्न्यूनैश्चाप्यधिकैस्तथा[3]। यदा त्वेते[4] प्रसूयन्ति क्षुद्भयानि तदादिशेत् ॥ ११
षण्मासं द्विगुणं चापि परं वाथ चतुर्गुणम्। राजा च[5] म्रियते तत्र भयानि च न संशयः ॥ १२
मद्यानि रुधिरा-ऽस्थीनि धान्या-ऽङ्गार-वसास्तथा[6]। *मेघो[7] वा[8] वर्षते यत्र भयं विद्याच्चतुर्विधम् ॥ १३
प्रसर्पन्ति[9] जलचराः पक्षिणो द्विपदास्तथा। वर्षमाणो जलं[10] हन्याद्[11] भयमाख्याति दारुणम् ॥ १४
निरिन्धनो[12] यदा[13] चाग्निरीक्ष्यते[14] सततं पुरे। स राजा नश्यते देशाच्छण्मासात् परतस्तदा ॥ १५
दीप्यन्ते यत्र शस्त्राणि यत्राप्यश्वा नरा गजाः। वर्षे च म्रियते राजा देशस्य च महद्भयम् ॥ १६
चैत्यवृक्षरसा यद्वत् प्रभवन्ति विपर्ययात्। समस्ता यदि वा व्यस्तास्तदा विन्द्याद् भयागमम् ॥ १७
दधि क्षौद्र घृतं[16] तोयं[17] दुग्धं[18] रेतैर्विमिश्रितम्[20]। निश्रवंति यदा वृक्षास्तदा व्याधिभयं विदुः ॥ १८
रक्ते[21] शस्त्रभय वक्ष्ये नीले[23] श्रेष्ठिभयं विदुः। अन्येष्वेषु विचित्रेषु वृक्षेषु तु भयं विदुः ॥ १९
§विस्वरं रुवमानस्तु चैत्यवृक्षो यतः पतेत्। ततो भय समाख्याति देशजं[25] पञ्चमासिकम् ॥ २०
नानावर्णैः समाच्छन्ना यदा दृश्यन्ते ये[26] द्रुमाः। राष्ट्रजं तद् भयं विन्द्याद् विशेषेण तदा दिपे[28] ॥ २१
शुक्लवर्णो द्विजान् हन्ति रक्तैः क्षत्रं[30] तदाश्रयम्। पीतवर्णो यदा व्याधिं तदा च वैश्यघातकः ॥ २२
नीलवर्णो निहन्त्याशु शूद्रांश्च प्रभृतिभराँन्। पशु-पक्षिभयं चित्रं विवर्णैः[33] क्षीभयङ्करः ॥ २३
मधुराः क्षीरवृक्षाश्च श्वेतपुष्प-फलास्तु ये। सौम्यायां दिशि यत्रार्थं जानीयात् प्रतिपुद्गलाः ॥ २४
कषायमधुरास्तिक्ता वर्णवीर्यविलासिनः। रक्तपुष्प-फलाः प्राच्यां सुदीर्घैर्नृप-क्षत्रयोः[44] ॥ २५
अम्लाः सलवणाः स्निग्धाः पीतपुष्प-फलाश्च ये। दक्षिणां दिशि विज्ञेया वैश्यानां प्रतिपुद्गलाः ॥ २६
कटु-कण्टकिनो रूक्षाः कृष्णपुष्प-फलाश्च ये। वारुण्यां दिशि[48] वृक्षाः स्युः शूद्राणां प्रति पुद्गलाः ॥ २७
महान्तश्चतुरश्राश्च स्वगाहाश्च वैरोपिताः। वनमध्ये स्थिताः सन्तः स्थावराः प्रतिपुद्गलाः ॥ २८
ह्रस्वाश्च तरवो येऽन्ये अंत्ये जाता वनस्य च। अचिरोद्भवकारा ये वायिनां प्रतिपुद्गलाः ॥ २९
ये विदिक्षु विमिश्राश्च विकर्मसु विजातिषु। पुद्गलाश्च तु ये येषा ते तेषा प्रतिपुद्गलाः ॥ ३०
श्वेतो राजा[53] द्विजान् हन्ति रक्तः क्षत्र-नृपान् वदेत। पीता वैश्यविनाशाय कृष्णः शूद्रनिपूदये[54] ॥ ३१

1 A B विकृति.। 2 A यूते। 3 A थविके। 4 C एतेषु। 5 A वत्ति। 6 C मद्य। * B This line and the succeeding line are missing in this Ms 7–8 C मेघवान्। 9 C सरीसृपा। 10-11 C जलादन्य। 12 A निरन्धते। 13 A missing in this Ms 14 A ईक्सते, C दीप्यते। 15 C निश°। 16 A भृत। 17 C दुग्ध। 18 C षि°। 19 C °मर्ण°। 20 C °मतिमिथक। † C This appears as 27th stanza in C. 21 C रक्षो। 22 C शुभ°। 23 A नीरे। 24 A राष्ट्र°, B D श्रेष्ठ°। ‡ A B D विषो भेद च मन्दे च वृक्षा येषु न सशय. ॥ § C This st appears in C as 26 th stanza 25 D दशज। 26 A ते। 27 C तदसा। 28 A त्रिजो; C विपो। 29 C द्विजान् हन्ति is twice written here 30 D क्षेत्र। 31 A समुदान्। 32 C यदा भृतिकराचरान्। 33 A B विवर्ण°। 34 C तु। 35 C कृष्ण°। 36 C उदीच्या। 37 C दृश्यंते। 38 C द्विजानो। 39 A B D °भन्द°। 40 A B D °मधुरा। 41 A B D °विलाकता। 42–44 C कृत्तिकायां विवर्द्धयेत्। 45 C D थाम्ला। ¶ B This and the next line are missing in this Ms. A D दक्षिणस्यां न वायुजा। 46 C D वृक्षाः। 47 C श्वेत°। 48 C प्राति। 49 C विरो°। 50 A विनिश्राश्च। 51 A D विकर्म°। 52 A °प्रविज्ञाकृति, B प्रविजायति। ** C प्रतिपुद्गलाश्च येषां तेषामुत्पातन पत्न्म्। 53 A रजो, B रिने, D रिजो। 54 A D रतु सूपत, B रतु सूचयेत्।

परचक्र नृपभयं क्षुधा-व्याधि-धनक्षयम्[1] । एवं लक्षणसयुक्ताः स्रावाः कुर्युर्महद्भयम् ॥ ३२
कीटदष्टस्य[2] वृक्षस्य व्याधितस्य च यो रसः । विवर्णः[3] स्रवते[4] गन्ध[5] न दोषाय स कल्पते ॥ ३३
वृद्धा द्रुमा निहन्त्याशु[6] मरणे पर्युपस्थिताः । ऊर्ध्वाः[*] शुष्का भवन्त्येते[7] तस्मात् तालक्षयेद्बुधः ॥ ३४
यथा[8] वृद्धो[9] नरः[10] कश्चित् प्राप्य हेतु विनश्यति । तथा[†] वृद्धो द्रुमः कश्चित् प्राप्य हेतु विनश्यति ॥ ३५
इतरे-तरयोगास्तु वृक्षादिवर्णनामभिः । वृद्धा[‡]-चलो-ऽमूलाश्च चरच्छैर्याश्च साधयेत् ॥ ३६
हसने[11] रोदने[12] नृत्ये[13] देवताना प्रसर्पणे । महद्भय विजानीयात् षण्मासात्रिगुणो[14](ण) परम् ॥ ३७
§चित्राश्चर्यसुलिङ्गानि निमीलन्ति वदन्ति[15] वा । ज्वलन्ति[16] च[17] विगन्धीनि भय राजवधोद्भवम् ॥ ३८
तोय-धान्यानि सहसा रुदन्ति च हसन्ति च । मार्जारवच वासति[18][19] तत्र विन्द्याद् महद्भयम् ॥ ३९
वादित्रशब्दाः श्रूयते[20] देशे यस्मिन मानुषैः । स देशो राजदण्डेन[21] पीड्यते नात्र सशयः ॥ ४०
तोय-धान्यानि[22] सर्वाणि वहन्ति रुधिर यदा । षष्ठे मासे समुद्भूते सग्रामः शोणिताकुलः ॥ ४१
चिरस्थायीनि[23] तोयानि तूर्णं यान्ति पय क्षयम्[24] । गच्छन्ति वा प्रतिस्रोत.[25] परचक्रागमस्तदा ॥ ४२
घर्षन्ते[26] चापि शीर्यन्ते चलन्ते वा तदाश्रयात्[27] । सशोणितानि दृश्यन्ते यत्र तत्र महद्भयम् ॥ ४३
शस्त्रैकोशात् प्रधावन्ते[29] नदन्ति[30] विचरन्ति वा । यदा रुदन्ति[31] दीप्यन्ति सग्रामस्तेषु निर्दिशेत् ॥ ४४
यानानि वृक्ष-वेश्मानि धूमायति ज्वलति वा । अकालन फल पुष्प तत्र मुख्यो विनश्यति ॥ ४५
भवने यदि श्रूयते[32] गीत-वादित्रनिस्वनाः । यस्य तद्भवन तस्य शारीर जायते भयम् ॥ ४६
पुष्पे पुष्प[33] फले[34] पुष्प[35] फले वा[36] विफल[37] यदा । ‖वध्यते वितथ विन्द्यात्तथा जनपदे भयम् ॥ ४७
चतु पदाना सर्वेषा मनुजाना यदाऽस्वरे[38] । श्रूयते[39] व्याहृत[40] घोर तदा मुख्यो विपद्यते[41] ॥ ४८
निर्घाते कम्पने[42] भूमौ[43] शुष्क[44]वृक्षप्ररोहणे । देश[45]पीडां विजानीयान्मुख्यश्चात्र न जीवति ॥ ४९
स्थिरा[**][46] भूमि प्रयातस्य यदा सुद्रवता व्रजेत् । निमज्जन्ति च वक्राणि तस्य विन्द्यात् महद् भयम् ॥ ५०
वल्मीकस्याशु[47][48] जनने मनुजस्य[49] निवेशने । अरण्य विशतश्चैव[50] तत्र विद्यान्महद् भयम् ॥ ५१
महापिपीलिकावृन्द सद्रकाश्रल(?)विप्लुतम् । तत्र तत्र च सर्वं वद्राद्भ्रमङ्गस्य चादिशेत् ॥ ५२

1 A D °जन° । 2 B D °दग्धस्य । [illegible] A विवर्ण° । 4 A missing in this Ms 5 A गगन । [illegible] C श्रवति । 7 A त वेदा ते । 8 C यथा । 9 A छन्दो, B छेद् । 10 A नरम् । * A This second half is missing in A but as it fits in with the context and as it is found in B C D it is placed there † A B D धन्वादिश्च वर्णना यत् । ‡ A B D वृक्षा चाले वृक्षमाश्च चमाणा उदराश्च साधयेत् । 11 A B D हसते । 12 A B D रोदते । 13 A B D नित्ये । 14 A B D त्रगुणात् । § C चित्राश्चर्यांसु लिङ्गानि । 15 C missing in this Ms 16–17 A कुच भाये । 18–19 C पश्यते । 20 A पूर्वेता । 21 A दाहुन । 22 A B D तोयवहानि । 23 A D °स्थायानि । 24 C तदा जय । 25 C अतिसोभ । 26 C वध्यते । 27 A D प्रयेत्, B दर्प्ययेत् । 28 C °शाखन्येषा, शाश्वतोसा । 29 C प्रवर्धन्ते । 30 A मन्दन्ति, C सिद्दति । 31 A C D रहति । § A This st is missing in A but as it is found in B C D it has been incorporated in the text 32 A श्रूयन्ते, D स्रवते । ¶ D This is found in this Ms as the 51st st 33 A पुष्पे । 34 A फल, C यदा । 35 A वाऽपि; C कश्चिन् । 36 A वाऽपि । 37 A फल । ‖ C भय जनपद विद्यात् भद्रबाहुवचो यथा ॥ 38 A चरे, B D स्वरे । 39 A स्तूयतेऽथा । 40 C व्याधयः । 41 C विनश्यते । 42 A कम्पते B D कदने । 43 A B भूमि, D भूमि । 44 A शुष्क°, B शुक्र । 45 D दोस° । ** C In place of this st the following st is found in C – यदा भूधरस्थानि निपतन्ति महीतले । तदा राष्ट्रभय विद्यात् भद्रबाहुवचो यथा ॥ 46 A not found in this Ms 47 A वल्मीकस्य । 48 A मुजनने, B C °स्याशु° । 49 A मु जस्य । 50 A स्थनेनैव, B वसने; D वामने । †† D This is not found in this Ms

महापिपीलिकाराशिर्विस्फुरंतो विपद्यते । उद्वासुचिष्ठते यत्र तत्र विद्यान्महद्भयम् ॥ ५३
श्वभ्रपिपीलिकावृन्दं निम्नमूर्द्धं विसर्पति । वर्षं तत्र विजानीयाद्भद्रबाहुवचो यथा ॥ ५४
*राज्ञो(ज्ञो)पकरणे भग्ने[1] चलिते पातितेऽपि[2] वा[3] । क्रव्यादसेवने चैव राजपीडां समादिशेत् ॥ ५५
वाजि-वारण-यानानां मरणे छेदने हृते । परचक्रागमं विद्यादुत्पातज्ञो जितेन्द्रियः ॥ ५६
क्षत्रियाः पुष्पितेऽश्वत्थे[4] ब्राह्मणाश्चाप्युदुम्बरे । वैश्याः प्लक्षेऽथ पीड्यन्ते न्यग्रोधे शूद्र-दस्यवः[5] ॥ ५७
इन्द्रायुधं[6] निशि श्वेतं[7] विप्रान् रक्तं च क्षत्रियान् । निहन्ति पीतकं वैश्यान् कृष्णं शूद्रभयङ्करम् ॥ ५८
भज्यते नश्यते वस्तु कम्पते शीर्यते जलम् । †चतुर्मासं परं राजा म्रियते भज्यते तदा ॥ ५९
पितामहेषु[8] सर्वेषु[9] ‡धर्मवेन्द्रकृतं जलम् । त्रैमासिकं विजानीयादुत्पातं ब्राह्मणेषु तम् ॥ ६०
रूक्षा विवर्णा विकृता यदा सन्ध्या भयानका । मारीं कुर्युः सुविकृतां पक्षं[10]-त्रिपक्षकं[11] भयम्[12] ॥ ६१
यदा वैश्रवणे[13] गमने कश्चिदुत्पातः समुदीर्यते । राजानश्च सचिवांश्च[14] पञ्चमासान् स पीडयेत् ॥ ६२
यदोत्पातोऽप्यनेकश्चिद्दृश्यते विकृतैः[15] क्वचित् । तदा व्याधिश्च मारी च चतुर्मासात् परं भवेत् ॥ ६३
यदा चन्द्रे वरुणे वोत्पातः कश्चिदुदीर्यते । §मरकः सिन्धु-सौवीर-सुराष्ट्र-वत्सभूमिषु ॥ ६४
भोजेषु[16] च भयं विद्यात् पूर्वे[17] ध्रुवं[18] म्रियते नृपः । पञ्चमासात् परं विद्याद् भयं घोरमुपस्थितम् ॥ ६५
रुद्रे[20] च वरुणे कश्चिदुत्पातः[21] समुदीर्यते । सप्तपक्षं भयं[22] विद्याद् ब्राह्मणानां न संशयः ॥ ६६
इन्द्रस्य प्रतिमायां तु यदुत्पातः प्रदृश्यते । सङ्ग्रामे त्रिषु मासेषु राज्ञः सेनापतेर्वधः ॥ ६७
यदुत्पातो बलदेवे[23] तस्योपकरणेषु च । महाराष्ट्रान् महायोद्धान् सप्त मासान् प्रपीडयेत्[24] ॥ ६८
वासुदेवे यदुत्पातस्तस्योपकरणेषु च । चक्रारूढाः प्रजा ज्ञेयाश्चतुर्मासान् वधो[25] नृपे[26] ॥ ६९
प्रद्युम्ने[27] वाऽथ[28] उत्पातो गणिकानां भयावहः । ||विशालायां च द्रष्टव्यं ¶भयं चेद्वाऽष्टमासिकम् ॥ ७०
यद्यार्यप्रतिमायां तु किञ्चिदुत्पातजं भवेत् । चौरा मासा त्रिपक्षाद्वा $विलीयन्ति व्रजन्ति[29] वा ॥ ७१
यदुत्पातः श्रियाः[30] कश्चित् त्रिमासीत्कुरुते[31] फलम् । वणिजां पुष्प-बीजानां **वनिता-लेख्यजीविनाम् ॥ ७२

वीरस्थाने श्मशाने च यदुत्पातः समीर्यते[32] ।
चतुर्मासान् क्षुधा-मारी[33] पीड्यन्ते प्रतनिश्रये[34](प्रतिनश्च ये) ॥ ७३

यदुत्पातः(ताः) प्रदृश्यते(यन्ते) विश्वकर्मणि(र्माण)माश्रितः(ताः) ।
पीड्यन्ते शिल्पिनः सर्वे पञ्चमासात्परं[35] भयम् ॥ ७४

---

* These three sts. are not found in A B D but as they have got fitting context they have been embodied in the text 1 B after भग्ने, दग्धे is found in this Ms. 2-3 A B these two words are missing in these Mss 4 A स्वत्थे; B D वत्थे । 5 C °दासकः । 6 C इन्द्रियायुध । 7 C निश्चेतं । † C This is dropped in C. Therefore the first half of the succeeding st. forms the second half of every preceding st. in C. 8 C पिता-महर्षि° । 9 C °सोमेषु । ‡ C धर्मदेवो यथा घटे । 10 पर्यान्ते पक्षिक । 11 B D पर्य° । 12 C परम् । 13 A वै गमणे । 14 A it is not found in this Ms. 15 C च सतः । § A B D ताम्रेषु च द्वारेषु सराष्ट्रवत्स भूमिषु । 16 A B D भोजनेषु । 17 A B D वध । 18-19 A B D सर्वेषु । 20 A चन्द्रे, B भद्रे, D साद्रे । 21 A उत्पातः । 22 C पक्ष । 23 C बले कश्चित् । 24 C सर्वे । 25 C वरी भयम् । 26 A भवेत् । 27-28 C प्रथजस्थितु । || A विशीला चैव दृश्यम्; B D विशीला चैव दृश्य । ¶ A B D सर्वा दुस्थ मासिकः । 29 A भूशसाप । $ C पीड्यन्ते मात्र संशयः । 30 A श्रियः । 31 C मासात् । ** C तथा लेख्योपजीविनाम् । 32 C समीहते । 33 C °मारी । 34 A प्रतिश ये; B प्रतिश्रयः । 35 A B D °मासात्परं ।

भद्रशूली विकुर्वन्ति(न्ती) स्त्रियो[1] हन्तीह[2] सुव्रता[3]। आत्मान वृत्तिनो[4] चैव षण्मासात् पीडयेत् प्रजाम्[5] ॥ ७५
इन्द्राण्याः[6] समुत्पातैः[7] कुमार्य (री.) परिपीडयेत् । त्रिपक्षाद[8]क्षिरोगेण कुक्षि-कर्ण शिरोज्वरैः ॥ ७६
धन्वन्तरे समुत्पातो वैद्याना[9] स भयङ्कर । षाण्मासिकविकाराश्च रोगजात् जनयेन्नृणाम् ॥ ७७
जामदग्न्ये[10](ग्ये) यदा[11] रामे[12] विकारः कश्चिदीर्यते । तापसाश्च तपाढ्याश्च[13] निर्पक्षेण जिघासति ॥ ७८
पञ्चविंशतिरात्रेण कबन्ध यदि दृश्यते । सन्ध्याया भयमाप्याति महापुरुषविद्रवम् ॥ ७९
सुलसाया[15] यदोत्पातः षण्मास सर्पिजीविन । पीडयेद् गरुडे[16] यश्च[17] वासुकास्तिक[18]भक्तिषु ॥ ८०
भूतेषु[19] यैः[20] समुत्पातैः[21] सदेव[22]परिचारिकैः[23] । मासेन पीडयेत्तूर्णं[24] निर्ग्रन्थवचन यथा ॥ ८१
अर्हत्सु[25] वरुणे[26] रुद्रे[27] गृहे[28] शुक्रे[29] नृपे[30] भवेत्[31] । पञ्चाल-गुरु-शुक्रेषु पावकेषु पुरोहिते[32] ॥ ८२
धाते[33]ऽग्नौ[34] वासुभद्रे च विश्वकर्म-प्रजापतौ । सर्वस्य तद् विजानीयात् वक्ष्ये[35] सामान्यज फलम्[36] ॥ ८३
चन्द्रस्य वरुणस्यापि रुद्रस्य च वधूषु च । स महाराजसूत्पातो राजाग्रमहिषीषु च ॥ ८४
एका[37] यस्य[38] यदा[39] भार्या या चान्य केवला[40] स्त्रियो[41] । कुर्वन्ति किञ्चिद् विकृत प्रधानस्त्रीषु तद्भयम् ॥ ८५
एव देशे च जातौ च कुले[42] पाखण्डि[43]-भिक्षिषु[44] । तज्जातिप्रतिरूपेण स्वैः स्वैर्देवैः शुभ वदेत् ॥ ८६
उद्गच्छमानः सविता पूर्वतो विकृतो[45] यदा । स्थावरस्य विनाशाय पृष्ठतो यायिनाशन ॥ ८७
हेमवर्णः सुतोयार्थं मधुवर्णो भयङ्कर । शुक्ले च सूर्यवर्णेऽस्मिन् सुभिक्ष क्षेममेव च ॥ ८८
हेमन्ते शिशिरे रक्तः पीतो ग्रीष्म-वसन्तयोः । वर्षासु शरदि शुक्लो विपरीतो भयङ्करः ॥ ८९
दक्षिणे चन्द्रशृङ्गे तु यदा तिष्ठति भार्गव । अभ्युत्क(ग)त[47] तदा राजा बल ह[48]न्या[49]त्सपार्थिव[50] ॥ ९०
चन्द्रशृङ्गे यदा भौमस्तिष्ठते[51] विकृतो[52] भृशम् । प्रजास्तत्र विपद्यन्ते क्षुद्[53]वैः पार्थिवाश्चलाः ॥ ९१
शनैश्चरो यदा सौम्य[54]शृङ्गे[55] पर्युपतिष्ठति । तदा वृष्टिभय घोर दुर्भिक्ष प्रकरोति च ॥ ९२
भिनत्ति सोम मध्येन ग्रहेष्वन्यतमो यदा । तदा राजभय[56] विन्यात् प्रजा[57]क्षोभ च दारुणम् ॥ ९३
राहुणा गृह्यते चन्द्रो यस्य नक्षत्रजन्मनि । रोग मृत्युभय वाऽपि तस्य कुर्यान्न सशय ॥ ९४
क्रूरग्रहयुत[58]श्चन्द्रो गृह्यते दृश्यते[59]ऽपि[60] वा[61] । तदा क्षुभ्यन्ति सामन्ता राजा[62] राष्ट्र च पीड्यते ॥ ९५
लिखेत[63] सोम शृङ्गेन भौम[64] शुक्र गुरु यथा । शनैश्चर[65] चाधिकृत पङ्क भयानि तदा दिशेत् ॥ ९६

1 A स्तूहा D गृहा । 2 B अर्हन्ती । 3 C सुव्रत । * C अन्याश्च प्रतिमा कश्चिद् पङ्क्तिमीते प्रदीपयेत् ॥ 4 A मतिवीराश्च । 5 B प्रजम्; D प्रजत् । 6 A B D इन्द्राण्याय । 7 C स इत्पात । 8 A नृपक्षय; C नृपक्षात् । 9 A विद्यानाम् । 10 B वामदग्ध, C वामदग्नेव, D वामदग्धे । 11-12 C आरामे । 13 B तपाद्यांश्च, C तपोधाश्च D तपाद्याते । 14 A नृ° । 15 A सलसायां; B शुलसायां, D सलभायाम् । 16–17 C गरुडायांश्च । 18 C वास्तुकेशूग- । 19 A B D भूते । 20-21 A B D यस्या यदुत्पातः । 22 A सदैव । 23 A B परिचारिक ; C परिवारक । 24 C मरणात् । 25 B D वरुणेन्द्र° । 26 B D °भद्रे । 27 A भद्रे, C शक्रे । 28 A क्षुद्रे । 29–30 C व्याधिभय भवेत् । 31 A °कार्मुके; B °गुरु । 32 A B D पुरोहित । 33-34 A B D वायाग्नौ । 35 C राज्य° । 36 C भयम् ।
† C This and the following stanza are not found in this Ms 37–39 A येनकायदयदा । 40-41 D येवलस्तु यः । 42 C कले । 43 A D पाषड° । 44 A C °भिरिषु । 45 C त्रिकतो । 46 C सुदीसोय । 47 B अप्प, C अभ्यन्तरे; D अभ्युक्षत । 48 C दृष्टैः । 49–50 C हन्यमसशयः । 51 A B D निष्ठति । 52 A B C अविकृत । 53 A C क्षुत्क्षः । 54 C भृगो । 55 C भौमा । 56 A समय, C राजवध । 57 C राष्ट्र° । 58 A B D यदा स गृह्यते । 59–61 C सर्वतो भृशम् । 62 C राज । 63 A B D लिखते । 64 A B D सोम । 65 B शनैश्चरो ।

*यदा बृहस्पतिः शुक्रं भिन्द्यादथ विशेषतः । पुरोहितास्तदाऽमात्याः प्राप्नुवन्ति महद्भयम् ॥ ९७
ग्रहाः परस्परं यत्र भिन्दन्ति प्रविशन्ति वा । तत्र शस्त्राग्निज्यानि विन्द्यादर्थविपर्ययम्[2] ॥ ९८
स्वतो ग्रहमन्यं श्वेतं प्रविशेत लिखेत् तदा । ब्राह्मणानां मिथो भेदं मिथःपीडां विनिर्दिशेत् ॥ ९९
एवं शेषेषु वर्णेषु स्ववर्णैश्चारयेद् ग्रहः । वर्णैः स्वमयानि स्युस्तद्युतान्युपलक्षयेत् ॥ १००
श्वेतो ग्रहो यदा पीतो रक्तकृष्णोऽथवा भवेत् । †स्ववर्णविजयं कुर्यात् यथास्वं वर्णशङ्करम् ॥ १०१
उत्पाता विविधा ये तु ग्रहाऽऽघाताश्च दारुणाः । उत्तराः सर्वभूतानां दक्षिणा मृगशृङ्गिणाम् ॥ १०२
करङ्कं[5] शोणितं[6] मांसं विद्युतश्च भयं वदेत् । दुर्भिक्षं जनमारिं च शीघ्रमाख्यान्त्युपस्थितम् ॥ १०३
शब्देन महता भूमिर्यदा रसति[8] कम्पते । सेनापतिरमात्यश्च राजा राष्ट्रं च पीड्यते ॥ १०४
फले फलं यदा किञ्चित् पुष्पे पुष्पं च दृश्यते । गर्भाः पतन्ति नारीणां युवराजा च बध्यते ॥ १०५
नर्तनं जल्पनं[9] हासमुन्मीलनं[10]-निमीलने । दिवा यत्र प्रकुर्वन्ति तत्र विन्द्यान्महद्भयम् ॥ १०६
‡पिशाचा यत्र दृश्यन्ते देशेषु नगरेषु वा । अन्यराजा भवेत्तत्र प्रजानां च महद्भयम् ॥ १०७
भूमिर्यत्र[11] नमो[12] याति विशति[13] वसुधौ जलम् । दृश्यन्ते वाऽम्बरे देवास्तदा राजवधो ध्रुवम् ॥ १०८
धूम-ज्वालां रजो भस्म[14] यदा मुञ्चंति देवताः । तदा तु म्रियते राजा मूर्च्छितस्तु[15] जनक्षयः ॥ १०९
मृग-पक्षि[16]-पशूनां च भाषणे ज्वलने गमे । जनक्षयाः प्रभूतास्तु विकृते वा नृपवधः ॥ ११०
§विकृताकृति-संस्थाना जायन्ते यत्र मानवाः । तत्र राजवधो ज्ञेयो विकृतेन सुतेन वा ॥ १११
वप्रः सेनापतेश्चापि[18] भयं दुर्भिक्षमेव च । $अमेघा ह्यथवा वृष्टिस्तदा स्यान्नात्र संशयः ॥ ११२
द्वारं शक्रगृहं[19] वेश्म राज्ञो देवगृहं तथा । धूमायन्ते यदा राज्ञस्तदा मरणमादिशेत् ॥ ११३
‖परिघोऽर्गलौ कपाटं द्वारं रुन्धन्ति वा स्वयम् । पुररोधस्तदा विन्द्यान्निगमानां महद्भयम् ॥ ११४
यदा द्वारेण नगरं शिवा प्रविशते दिवा । वाश्यमाना विकृता वा तदा राजवधो ध्रुवम् ॥ ११५
¶अन्तःपुरेषु द्वारेषु विष्णुमित्रे(तीर्थे) तथा पुरे । अट्टालकेऽथ हट्टेषु मधु लीनं विनाशयेत् ॥ ११६
धूमकेतुहतं मार्गं शुक्रश्चरति वै यदा । तदा तु सप्त वर्षाणि महान्तमनयं वदेत् ॥ ११७
गुरुणा प्रहतं मार्गं यदा भौमः प्रपद्यते । **भयं स(सा)र्वजनिकं करोति बहुधा नृणाम् ॥ ११८
भौमेनापि हतं मार्गं यदि सौरिः[20] प्रपद्यते[21] । तदाऽपि शूद्र-चौराणामनयं[22] कुरुते नृणाम् ॥ ११९
सौरेण तु हतं मार्गं वाचस्प[23-24](वाचस्पतिः) प्रपद्यते[25] । भयं सर्वजनानां तु करोति बहुधा तदा ॥ १२०
‡‡राजदीपो निपतते भ्रश्यतेऽधः कदाचन । षण्मासात्पक्षमासाद्वा नृपमन्यं[31] निवेदयेत् ॥ १२१

* C this is missing in C. † B This second half is not found in this Ms. 1 C शास्त्र° । 2 A B D °विवर्धनम् । 3 A सुवर्णं° । 4 A स्वर्णसंकरम्; C स्वं चार्थं संकरम्; D सुवर्णसंकरम् । 5 B C D करंक । 6 A B D शाणितं । 7 A C D विकृताश्च । 8 A रसति । 9 A B D जल्पने । 10 C सम्मीलन । ‡ this is not found in A B D. 11 A भूर्मिर्युं च । 11-12 C नमयं भूमिमा° । 13 A C D विशति । 14 A वपु च; B वपुपं; D वपुवं । 15 A वस्त्र । 16-17 C घोरश्चैव । 18 C स्थिरमात्र° । $ A B D सस्यं जना सदं वा च । § C पीडा तत्र प्रजाना च विकृते तु नृपो वधः ॥ 19 A B D राज्ञः । 20-21 A वैद्धिव्यंपा । 22 A °मयं । ‖ C missing in this Ms. 23-24 A परिसार्यका । ¶ C this st. is found with some variations in the following manner in this Ms.—गृहे अन्त पुरे द्वारे मंडे गोपुरेष्वथ । अट्टालकेष्वथाथेषु मधु लीन न शोभनम् ** C क्षत्रियाणां बहुविधं तदाऽपि भयमादिशेत् ॥ 25-26 A वावस्सं । 27 A प्रतिपद्यते । 28 D अवक्षयं । 29 B चोमयं; C यदा सौरिः; D चापदयं । 30 A B D प्रतिपद्यते । ‡‡ A B D राजाप्रदीपो नृपतेर्भज्यते वा कदाचन । 31 C °मृत्युं ।

निर्जीवामापणे हासे जलरोधे[1] प्रधावने । जातमात्रस्य तु शिशो[2] सुमहद्भयमादिशेत् ॥ १२२
निवर्तते[3] यदा छाया परिग्रस्ता जलाशयात् । प्रदृश्यते च दैत्याना[4] सुमहद्भयलक्षणम् ॥ १२३
अंद्वारे द्वारकरण कृतस्य च विनाशनम् । हतस्य ग्रहण वाऽपि तदा ह्युत्पातलक्षणम् ॥ १२४
यजने छादन यस्य ज्वलिताङ्गमथाऽपि वा । स्पदते वा स्थिर किञ्चित् कुलहानिं तदाऽऽदिशेत् ॥ १२५
दैवज्ञा भिक्षव[5] प्राज्ञाः साधवश्च पृथग्विधा. । परित्यजन्ति त देश ध्रुवमन्यत्र शोभनम् ॥ १२६
युद्धानि कलहा बाधा विरोधा-ऽरिविवृद्धय । अभीक्ष्ण यत्र वर्तन्ते त देश परिवर्जयेत् ॥ १२७
विपरीता यदा छाया दृश्यन्ते वृक्ष-वेश्मनि । यदा ग्रामे पुरे वाऽपि प्रधानवधमादिशेत् ॥ १२८
‡महावृक्षो यदा शाखामुत्करा[6] मुञ्चते द्रुतम् । भोजकस्य वध विन्द्यात् सर्पाणा वधमादिशेत् ॥ १२९
पांशुवृष्टिस्तथोल्का[7] च निर्घाताश्च सुदारुणा । यदा पतन्ति युगपद् घ्नन्ति राष्ट्रं सनायकम् ॥ १३०
रसाश्च विरसा यत्र नायकस्य च दूषणम् । तुलामानस्य[8] ह्रसन राष्ट्रनाशाय तद्भवेत् ॥ १३१
शुक्लप्रतिपदि चन्द्रे सम भवति मण्डलम् । भयकर तदा तस्य नृपस्याथ न सशयः ॥ १३२
समाभ्या यदि शृङ्गाभ्या यदा दृश्येत चन्द्रमाः । धान्य भवेत्[9] तदा[10] न्यून[11] मन्दवृष्टिं विनिर्दिशेत्[¶] ॥ १३३
वामशृङ्ग यदा वा स्यादुन्नत दृश्यते भृशम् । तदा सृजति लोकस्य दारुणत्व न सशयः ॥ १३४
ऊर्ध्वस्थित नृणा पाप तिर्यक्स्थ राजमन्त्रिणाम् । अधोगत च वसुधा सर्वां हन्यादसशयम् ॥ १३५
शुक्ल रक्ते भय पीते धूमे दुर्भिक्षविद्रवे । चन्द्रे सदोदिते ज्ञेय भद्रबाहुवचो यथा ॥ १३६
दक्षिणात्परतो दृष्ट चोरदू[12]र्नभयङ्करम् । अपरे तोयजीवाना ‖वायव्ये हन्ति वै[13] गर्दभम् ॥ १३७
शाक-कीटेषु चलेषु विषादेषु च रिङ्गिषु । वाहनेषु च दृष्टेषु विन्द्याद्भयमुपस्थितम् ॥ १३८
ऊर्ध्व धूपो[15] यदा नर्देत्[16] तदा स्याच्च भयङ्कर । कुक्कुट[17] चलते[18] वापि तदाऽपि स भयङ्कर[19] ॥ १३९
व्याधय प्रबला यत्र माल्य(च)गन्ध[20] न वायते[21] । $आहूतिपूर्णकुम्भाश्च विनश्यन्ति भय वदेत् ॥ १४०
नयनस्य[22] प्रसन्नेन[23] ज्वलते[24] मधुरां गिरा[26] । अरुन्धती[27] न पश्येत स्वदेह यदि दर्पणे ॥ १४१
न पश्यति स्वकार्याणि **परकार्यविशारद । मैथुने यो निरक्तश्च न च सेवति मैथुनम् ॥ १४२
न मित्रचित्तो[28] भूतेषु[29] स्त्री वृद्ध सेवते[30] शिशुम् । विपरीतश्च सर्वत्र सर्वदा स भयावह[31] ॥ १४३
अभीक्ष्ण पापसमस्य(श्च) निरुत्साहो विचिन्तितैः । अलक्ष्मीपूर्णो[32] न[33] चिरात्[34] प्राप्नोति स महद्भयम् ॥ १४४
क्रव्यादा[5] शकुना यत्र बहुशो विकृतस्वना । यत्रेन्द्रियार्था विगुणा[35] स्त्रियो[36] हीनाश्च मानवा. ॥ १४५
‡‡निपतति द्रुमच्छिन्नो वपुश्च[37] ह्यलक्षणम् । रत्नानि यस्य नश्यन्ति बहुश[5] प्रज्वलन्ति वा ॥ १४६

---

1 D जलरोध । 2 A B C न is additionally found before this word in these Ms 3 C परिवर्ज्या । 4 A D दैत्यानां, C दैत्याना । * A this st is missing in this Ms † C सर्वमुत्पातलक्षणम् ॥ ‡ B this is not found in this Ms 5 A B C °भुत्तरे । 6 A तथोल्का B D तथोल्का । 7 C मानुषस्य । 8 A B D तुलामानस्य । § A B D सम चन्द्रमसंशयम् । ‖ B भवति; C तदा । 10–11 B दुर्भिक्ष, 10 D दु स । ¶ B D दारुणत्वमय भयम् । 12 A चोदत च, B चोरोभय । ‖ A चयो व्यहन्ति वो वधाम् । 13–14 B D पावकम् । 15 B D वृष्टो, C वृक्षो । 16 A नादि, C गर्धेद् । 17 C कुक्कुटा । 18 C हसते । 19 A भयदा । 20 A बन्धन । 21 C दायते । $ C आहुति पूतिगन्धाश्च विनाशाय न सशय । 22 A च । 23 A प्रसूते; B D प्रसूते । 24 A ज्वलतो । 25–26 C वा न सपदा । 27 A B अनुहरी । ** C विहर्तुंचति यो नरः । 28 A B °भूतो, D °चित्तो । 29 A विचेषु; B वृषेषु । 30 C भजेत । 31 A नियमिता, C भयावहस्मृतिः । 32–34 A अचिरात्प्रियतम् । 35 C विगुणाः । 36 A C स्त्रियाः । ‡‡ C not found in this Ms 37 A सम ।

क्षीयते वा म्रियते वा पञ्चमासात् परं नृपः । गजस्यारोहणे यस्य यदा दन्तैः[1] प्रभिद्यते ॥ १४७
दक्षिणे राजपीडा स्यात्सेनायास्तु वधं वदेत् । मूलभङ्गस्तु यातारं करिकान्[2](?) नृपं वदेत् ॥ १४८
मध्यमं रोगजाध्यक्षमग्रजे सपुरोहितम् । विडाल-नकुलो-लूक-काक-कङ्कसमप्रभाः ॥ १४९
यदा भङ्गो भवत्येषां तदा ब्रूयादसत् फलम् । शिरो-नासाग्रकण्ठेन सानुस्वारं निशंसनैः ॥ १५०
साक्षार्थौ[3]* सञ्चितं यच्च न तद् ग्राह्यन्तु वाजिनाम् । नाभ्यङ्गतो महोरस्कः कण्ठे वृत्तो सुरेरितः ॥ १५१
स पार्श्वे स्वन्दालुब्धो नो गृह्यते हि सः(?) । अन्योन्यसमुदीक्षन्ते हेष्यस्थानगता हयाः ॥ १५२
शयना-ऽऽसने परीक्षा ग्राममारी वदेत् ततः । सन्ध्यायां सुप्रदीप्तायां यदा[4] सेनामुखा[5] हयाः ॥ १५३
त्रासयन्तो विभेषन्तो घोरात् पादसमुद्धृताः । दिवसं यदि वा रात्रं हेषन्ति सहसा[6] हयाः[7] ॥ १५४
सन्ध्यायां सुप्रदीप्तायां तदा विन्द्यात् पराजयम् । उच्छुका[8] (उन्मुखा) रुदन्तो वा[9] दीनं दीनं समन्ततः ॥ १५५
हया यत्र तवोत्पातं निर्दिशेद्राजमृत्यवे । विच्छिद्यमाना[10] हेषन्ते[11] यदा रूक्षस्वरं हयाः ॥ १५६
स्वरवद्दीमनादेन तदा विन्द्यात् पराजयम् । उत्तिष्ठन्ति निषीदन्ति विश्वसन्ति[12] भ्रमन्ति च ॥ १५७
रोगार्त्ता इव हेषन्ते तदा विन्द्यात् पराजयम् । ऊर्द्धमुखा विलोकन्ति विन्द्याज्जनपदे भयम् ॥ १५८
शान्ताः प्रहृष्टा धर्मार्त्ता विचरन्ति यदा हयाः । यालानां[13] वीक्ष्यमाणा[14]स्ते न ते ग्राह्या विपश्चितैः[15] ॥ १५९
मूत्रं पुरीषं बहुशो विलुण्ठा[16]ः प्रकुर्वतः । हेषन्ते दीननिद्रार्त्तास्तदा कुर्वन्ति ते जयम् ॥ १६०
स्तम्भयन्तोऽथ लाङ्गूलं हेषन्तो दुर्मना हयाः । मुहुर्मुहुश्च जृम्भन्ते तदा शत्रुभयं वदेत् ॥ १६१
यदा विरुद्धं हेषन्ते स्वरूपं विकृतिकारणम् । तवोपसर्गो व्याधिर्वा सद्यो भवति रात्रिजः ॥ १६२
भूम्यां प्रसित्वा ग्रासं तु हेषन्ते प्राङ्मुखा यदा । अश्वारोहाश्च[17-19] वद्धाश्च[20] तदा छिद्यति क्षुद्भयम् ॥ १६३
शरीरं केसरं पुच्छं यदा ज्वलति वाजिनः । परचक्रं प्रयातं च देशभङ्गं च निर्दिशेत् ॥ १६४
यदा वालाः प्रक्षरन्ते पुच्छं चटपटायते । वाजिनः सस्फुलिङ्गा वा तदा विन्द्यान्महद्भयम् ॥ १६५
हेषन्ते तु यदा राज्ञः[21] पूर्वाह्णे नाग-वाजिनः । तदा सूर्यग्रहं विन्द्यादपराह्णे तु चन्द्रजम् ॥ १६६
शुष्कं काष्ठं तृणं वाऽपि यदा संदंशते हयः । हेषन्ते सूर्यमुद्वीक्ष्य तदाऽग्निभयमादिशेत् ॥ १६७
यदा शेवालजलेवाऽपि मग्नं कृत्वा मुखं हयाः । हेषन्ते विकृता यत्र तदाप्यग्निभयं भवेत् ॥ १६८
उल्लासमाना हेषन्ते संदश्य दशनान्[22] हयाः । सङ्ग्रामे विजयं क्षेमं भर्तुः[23] पुष्टिं[24] विनिर्दिशेत् ॥ १६९
प्रसारयित्वा ग्रीवां च स्तम्भयित्वा च वाजिनाम् । हेषन्ते विजयं ब्रूयात्सङ्ग्रामे नात्र संशयः ॥ १७०
श्रमणा ब्राह्मणा वृद्धा न पूज्यन्ते यथा पुरा । सप्तमासात् पर यत्र भयमाख्यात्युपस्थितम् ॥ १७१
अनाहतानि तूर्याणि नदन्ति विकृतं यदा । षष्ठे मासे नृपो वध्यः भयानि च तदाऽऽदिशेत् ॥ १७२
कृत्तिकासु यदोत्पातो दीप्तायां दिशि दृश्यते । आग्नेयीं वा समासृत्य त्रिपक्षादग्नितो भयम् ॥ १७३
रोहिण्यां तु यदा[25] घोषो[26] निर्घातो[27] यदि दृश्यते । सर्वाः प्रजाः प्रपीड्यन्ते षण्मासात्परतस्तदा ॥ १७४
उल्कापातः सनिर्घातः सवातो यदि दृश्यते । रोहिण्यां पञ्चमासेन कुर्याद्घोरं[28] महद्भयम्[29] ॥ १७५

* C From here onwards some six sts are not found in this Ms. 1 B D दंतः । 2 A करिनं, D करिकाणं । 3 A साक्षार्क्षी । 4 A B D यदा । 5 B D °मुखाः । 6 A D संधयो, B संधयो । 7 A हया । 8 A B D उच्चमानां । 9 A D रुदनी च, B रुदन्ति च । 10 A B D विच्छिद्यते । 11 A B D हेषहेषं । 12 A B D वित्रसति । 13 C योला । 14 C संवीक्षमाणा । 15 C निमित्ततः । 16 A विण्मूत्र । 17–20 C भयरोहावरद्धाश्च । 21 C प्राह्ने । † C पूर्वनागा सवाजिनाम् । ‡ B यदाखेजोजसेवापि, C यदा सेनाजले वाऽपि । 22 C तदा संदशना । 23 C कर्तुं । 24 C वृष्टिम् । 25 A B यदा । 26 B मेघो । 27 A D निर्घातो; B निर्घाते । 28–29 A B कलहमृत्युदम् ।

एवं नक्षत्रशेषेषु यदुत्पाताः पृथग्विधाः । देवतार्जनलीनं[1] च प्रसाध्यं भिक्षुणा सदा ॥ १७६
वाहनं महिषीं पुत्रं बलं सेनापतिं पुरम् । पुरोहितं नृपं[3] वित्तं[4] घ्नन्त्युत्पाताः समुच्छ्रिताः ॥ १७७
एषामन्यतरं हत्वा निर्वृतिं यान्ति ते सदा । परं द्वादशरात्रेण सद्यो नाशयिता पिता ॥ १७८
यत्रोत्पाताश्च[5] दृश्यन्ते *यथाकालमुपस्थिताः । तेन संचयदोषेण राजा देशस्य नश्यते ॥ १७९
देवान् प्रव्रजितान् विप्रांस्तस्माद्राजाऽभिपूजयेत् । तदा शाम्यति तत् पापं यथा साधुभिरीरितम् ॥ १८०
यत्र देशे समुत्पाता दृश्यन्ते भिक्षुभिः क्वचित् । ततो देशादतिक्रम्य व्रजेयुरन्यतस्तदा ॥ १८१
संचिते[6] भिक्षुदे[7] देशे निरुत्पाते प्रियातिथौ । विहरन्ति सुखं तत्र भिक्षवो धर्मचारिणः ॥ १८२

†॥ इति नैर्ग्रन्थे भद्रबाहुके निमित्ते उत्पातकाण्डं नाम चतुर्दशमोऽध्यायः ॥

अथातः सम्प्रवक्ष्यामि ग्रहचारं जिनोदितम्[8] । तत्रादितः प्रवक्ष्यामि शुक्रचारं निबोधत ॥ १
भूतं भव्यं भवद्वृष्टिमवृष्टिं भयमग्निना । जया-ऽजय-रुग-ऽर्थांश्च सर्वान् सृजति भार्गवः ॥ २
म्रियते वा प्रजा तत्र वसुधा च प्रकम्पते । दिवि मध्यं यदा गच्छेदर्धरात्रेण भार्गवः ॥ ३
दिवि मध्ये यथा दृश्येच्छुक्रः सूर्यपथोस्थितः[11] । सर्वभूतभयं कुर्याद्विशेषाद्वर्णसङ्करः ॥ ४
अकाले उदितः शुक्रो निवृत्तो वा यदा तदा । त्रिसांवत्सरिकं ग्रीष्मं शारदं चेतिभिर्भवेत् ॥ ५
गुरु-भार्गव-चन्द्राणां रश्मयस्तु यदा हताः । एकाहमपि दीप्यन्ते[12] तदा विन्द्याद्भयं खलु ॥ ६
भरण्यादीनि चत्वारि चतुर्नक्षत्रकाणि ह । षडेव मण्डलानि स्युस्तेषां नामानि लक्षयेत् ॥ ७
सर्वभूतहितं रक्तं परुषं रोचनं तथा । ऊर्ध्वं[13] चण्डं[14] च तीक्ष्णं च निरुक्तं तानि साधयेत् ॥ ८
§प्रथमं च द्वितीयं च मध्यमे शुक्रमण्डले । तृतीयं पञ्चमं चैव मण्डले साधुनिन्दिते ॥ ९
चतुर्थे चैव षष्ठं च मण्डले प्रवरे स्मृते । आद्ये द्वे मध्यमे विन्द्यान्निन्दिते त्रिकपञ्चमे ॥ १०
श्रेष्ठे चतुर्थ-षष्ठे च मण्डले भार्गवस्य तु । शुक्लपक्षे प्रशंसन्ति सर्वेष्वस्तमनोदयम् ॥ ११
अथातो चक्रगतिमान् भार्गवो नाभिवर्षति । विकृतानि च वर्तन्ते सर्वमण्डलदुर्गते ॥ १२
प्रथमे मण्डले शुक्रो यदास्तं यात्युदेति वा । मध्यमा सस्यनिष्पत्तिर्वर्षं[15] च मध्यमं नृणाम्[16] ॥ १३
भोजान् कलिङ्गानुड्रांश्च काश्मीरान् दस्यु-मालवान् । यवनान् सौरसेनांश्च गो-द्विजान् शबरान् वधेत् ॥
पूर्वतो[17] नरकालिङ्गो मागधो[18] जयते[19] नृपः । सुवृष्टिं क्षेममारोग्यं मध्यदेशे विनिर्दिशेत् ॥ १५
यदा चान्ये तिरोहन्ति[20] तत्रस्थभार्गवं ग्रहाः । कुण्डा निजह्वी बभ्रवः[21] क्षत्रिया लब्धशाकुनाः[23] ॥ १६
धर्मिणः[24] सु(शू)रसेनाश्च मत्स्यकीर्णा अनेकशः । किराता महिषाश्चैव पीड्यन्ते शुक्रपीडिते[28] ॥ १७
द्वितीयमण्डले शुक्रो यदास्तं यात्युदेति वा । शारदस्योपघाताय विषमा वृष्टिमादिशेत् ॥ १८
अहिच्छत्रं च[29] पच्छं[30] च[31] सूर्यावर्तं च पीडयेत् । पुरोहिता अमात्याश्च भोजराजा विनश्यति ॥ १९

1 A दत्वान्दनि; B देवता च नि; C देवताश्च नि । 2 D °रक्ष । 3-4 A नृपचित्तं । 5 A यात्नत्या; B यातोत्पाता । * A तदा कल्ह समुच्छ्रितम्; B तथा कल्हसुच्छितं । † B not found in this Ms. 6 C सुवृत्ते; D सुवृत्ते । 7 C भक्षये, D भिक्षुरो । 8 A D °भाषितम्; C विशेषत. । ‡ This second half is missing in this Ms. 9-11 C सूर्य यदाऽऽस्थिता; 10 C °रथ°; 11 A B प्रस्थितो । 12 C पीड्यन्ते । 13-14 A ऊर्ध्वतोऽथ; 14 B D दण्ड । § C D अथ गोमूत्रगतिमान् । 15 C चित्र वर्षे । 16 C missing in this Ms 17 A D साल्वोसी । 18 B गधो । 19 C जायते । 20 A D भगिरोहन्ति । 21-23 C कदीवाषा. सावरया; 21 B D कुण्डी, 22 A विजह्वा; 23 A विजय । 24-25 C कच्छानके । 26 C निवृता. । 27 C मत्स्यकाण्डान । 28 A पीड्यते; B °पीडिता । 29-31 A चक्रवर्ते ।

यदा वाऽन्ये तिरोहन्ति तत्रस्थं भार्गवं ग्रहाः । निषादाः पाण्डि(ण्डु)का[1] म्लेच्छाः संकुलस्थाश्च[2] साधवः ॥२०
कोटिकाः[3] पुरुपादाश्च[4] शिल्पिनो वर्वराः[5] शकाः । वाहिका[6] यवनाश्चैव मण्डूकाः केकरास्तथा ॥ २१
पाञ्चालाः कुरवश्चैव पीड्यन्ते शङ्कु-ग(गा)न्ध(धा)राः[8] । एकमण्डलसंयुक्ते भार्गवे पीडिते फलम् ॥ २२
तृतीये मण्डले शुक्रो यदास्तं यात्युदेति वा । तदा धान्यं सनिचयं पीड्यन्ते मूढकेतवः[9] ॥ २३
वाटधानाः[10] कुनाटाश्च[11] कौलकूटश्च पर्वतः । †रिपवः कुरु-पाञ्चालाश्चातुर्वर्ण्यश्च पीड्यते ॥ २४
धाणिजाः[12] कुलजाः पण्या वनवासी तथाऽश्मकाः ।
अवन्ती(आवन्त्या)श्चापरान्ताश्च सपर्त्याः(?)[13] सचराचराः[14] ॥ २५
पीड्यन्ते भय-शस्त्राभ्यां क्षुधारोगेण चार्दिताः । स्नेहसंस्थानवर्णैश्च ¶विचार्यं नृपपीडनम् ॥ २६
चतुर्थे मण्डले शुक्रो कुर्यादस्तमनोदयम् । तदा सस्यानि[15] जायन्ते महामेघाः सुभिक्षदाः ॥ २७
पुण्यशीलो जनो राजा प्रजाश्चापि पुरोहितः[16] । बहुधान्यां[17] महीं विद्यादुत्तमं मेघ[18]वर्षणम् ॥ २८
§अन्वधा(जा)श्चाप्यावन्तश्च मूलिका-श्यामकास्तथा । वाह्नो[19] विहैश्च[20] दन्ताश्च[21] पीड्यन्ते सर्पकास्तथा ॥ २९
यदा चान्ये ग्रहा यान्ति सौरेयाः(?) म्लेच्छसङ्कुलाः । टङ्कनाश्च[22] पुलिन्दाश्च किराताः सौष्टकर्णिकाः(?)॥ ३०
पीड्यन्ते पूर्ववत् सर्वं दुर्भिक्षेण भयेन च । ऐक्ष्वाको म्रियते राजा शेषाणां क्षेममादिशेत् ॥ ३१
यदा या पञ्चमे शुक्रे कुर्यादस्तमनोदयौ । अनावृष्टिभयं घोरं दुर्भिक्षं जनयेत् तदा ॥ ३२
सर्वं श्वेतं तदा धान्यं क्रेतव्यं[24] सिद्धि[25] मिच्छता । त्याज्या देशास्तथा चैते निर्ग्रन्थैः साधुवृत्तिभिः ॥ ३३
स्त्रीराज्यं[26] ताम्रकर्णाश्च कर्णाटाः कमनोत्कटाः । वाल्हीकाश्च विदर्भाश्च मत्स्य-काशी-सतत्कराः ॥ ३४
स्फीताश्च रामदेशाश्च सूरसेनास्तथैव च । जायंते[32] वत्सराजानः परं यदि तदा हताः ॥ ३५
क्षुधा-मरण-रोगेभ्यश्चतुर्भागो भविष्यति । एषु देशेषु चान्येषु[33] भद्रबाहुवचो यथा ॥ ३६
यदा चान्येऽभिगच्छन्ति तत्रस्थं भार्गवं ग्रहाः । सुराष्ट्राः सिन्धु-सौवीराः मन्त्रि[34](त्रि)साराश्च साधवः ॥ ३७
आनर्त[35]-कच्छ-सैंधेयाः[36] साल्वशैश्चार्जुना जनाः । पीड्यन्ते तेषु देशेषु म्लेच्छस्य म्रियते नृपः ॥ ३८
यदा तु मण्डले षष्ठे कुर्यादस्तमनोदयम् । शुक्रस्तदा प्रकुर्वीत भयानि तत्र क्षुद्भयम् ॥ ३९
वत्साः पाञ्चाल-वाल्हीका गन्धाराश्च गर्मेलकाः[40] । विदर्भाश्च दशार्णाश्च पीड्यन्ते नात्र संशयः ॥ ४०
द्विगुणं धान्यमर्घेषु नोत्तरं वर्षयेत्[43] तदा । क्षत्रैः[44] शस्त्रं च व्याधिं च मूर्च्छयेत् वादशेन[45] यत्[46] ॥ ४१

---

1 B पण्डिता; C पडिका । 2 C सकलस्थाः । 3 A कोटिदाः; B D कोटिकाः । 4 C पौरुपादाः । 5 A वर्वरा सका । [illegible] C कलाः । 7 C वाल्हिकाः । 8 [illegible] D सपुगंधराः; C सांगुधाङ्गराः । 9 B स्थूटकेतवः; C हाटकेशाः; D स्थूलकेतवः । 10 A वाटधानाः । 11 C कुनाठाः; D कुनाटाः । * C दार्वतो कवयस्तथा । † C पाञ्चालाः कुरवश्चैव पीड्यते नात्र संशयः । ‡ C चातुर्वर्णांस्तथा पांत्या सर्वे च वनवासिनः । 12 B वाणिजाः; D धाणजाः । 13 B सापत्याः; C गोमत्याः; D सावत्याः । 14 B सवराधराः; C सधराधराः; D सधरावराः । ¶ C विचार्य मंदपीडितम् । 15 A साध्यानि । 16 B हिता । 17 A C °धान्यं । 18 A मेघ°; C मंद° । § B अंग्रधाश्चाप्यवंतश्च मूलकाश्यामकास्तथा । C अंते पश्चावावन्तिश्च कुलेकश्यामकास्तथा । D अंते पश्चाच्चवंतिश्च मूलकश्यामकास्तथा । 19-20 C वाह्नो त्रिधाः; D माह्नोर्विधा- । 21 C D कामाः । 22 A गौरिकाः; B सौरितु । 23 C कौंकणाः । 24 B क्रतव्यं; C कत्तव्यं । 25 C मूर्ति । 26 B त्रिराज्यं; C D चैराज्यं । 27-28 A कुनाला सुमचेव कलाः; B कुनाला सुरयेम्कलाः; 28 D क्रमसोत्कटाः । 29 C काश्मीराः । 30 C पहुवाः । 31 A B D °देवा- । 32 A जयते । 33 C नान्येषु । 34 A B मन्त्रि°; C मत्ति°; D मंत्रि° । 35 A B D आवर्त° । 36 C °धौधेया- । 37 A सन्धिस्थाः । 38 A वधु° । 39 C गश्च । 40 B गर्मेडिकाः; C वर्मेल्लिकाः । 41 A B विवसाः । 42 C महायण । 43 B D वर्षयं । 44 A C क्षत्रे । 45 D वादशे । 46 C यः ।

यदा चाऽन्येऽभिगच्छन्ति तत्रस्थं भार्गवं ग्रहाः । हिरण्यौपधयश्चैव शौण्डिका[1] दूतलेखकाः ॥ ४२

काश्मीरा वर्वराः[2] पौण्ड्रा[3] भृगुकच्छम (च्छा) अनु (नू) प्र(प)जाः[4] ।

पीड्यन्तेऽवन्तिगाश्चैव म्रियंते च नृपास्तथा ॥ ४३

नागवीथीति विज्ञेया भरणी-कृत्तिकाऽश्विनी । सत्त्वाना[5] रोहिणी चार्द्रा गजवीथीति निर्दिशेत् ॥ ४४

ऐरावणपथं विन्द्यात् पुष्याऽऽश्लेषा-पुनर्वसुः । फाल्गुनी च मघा चैव वृषवीथीति संज्ञिता ॥ ४५

गोवीथी रेवती चैव द्वे च प्रोष्ठपदे तथा । जरद्गवपथं विंद्याच्छ्रवणं वसु-वारुणम्[6] ॥ ४६

अजवीथीं विशाखा च चित्रा स्वातिः करस्तथा । ज्येष्ठा-मूला-ऽनुराधासु मृगवीथीति संज्ञिता ॥ ४७

अभिजिद्द्वे तथाषाढे वैश्वानरपथः स्मृतः । शुक्रस्यागमनाद्वर्णात् सस्यानाम् फलं वदेत् ॥ ४८

तज्जातैप्रतिरूपेण जघन्यो-त्तम-मध्यमम् । स्नेहादिषु शुभं ब्रूयाद् भक्षा(क्ष्या)दिषु[11] भयं वदेत् ॥ ४९

तिष्यो ज्येष्ठा तथाऽऽश्लेषा सन्ध्यानां(या) मूलमेव च । हस्त चित्रा मघा-ऽऽषाढे शुक्रो दक्षिणतो व्रजेत्॥ ५०

क्षुध्यन्ते[12] तोय-धान्यानि राजानः क्षत्रियास्तथा। उग्रभोगाश्च पीड्यन्ते धननाशो[13] विनाशकः[16] ॥ ५१

वैश्वानरपथो नाम्ना यदा हेमन्त-ग्रीष्मयोः । मारुता-ऽग्निभयं मृत्युः खारी च चतुःषष्टिका ॥ ५२

एतेषामेव मध्येन यदा गच्छति भार्गवः । विषम सर्वमाख्याति बीजानि तु स्थले वपेत् ॥ ५३

खारी द्वात्रिंशिका ज्ञेया मृगवीथीति संज्ञिता । व्याघयश्च त्रिपुं ज्ञेया यदा चरति भार्गवः ॥ ५४

एतेषां तु यदा शुक्रो व्रजत्युत्तरतस्तथा । विषमं सर्वमाख्याति भृशं निम्ने[18] वपेत्तदा ॥ ५५

कोद्रवाणां बीजाना खारी षोडशिका वदेत् । अजवीथीति विज्ञेया पुनरेषा न संशयः ॥ ५६

कृत्तिका रोहिणी चार्द्रा मघा मैत्रं पुनर्वसुः । स्वातिस्तथा विशाखासु फाल्गुन्योरुभयोस्तथा ॥ ५७

दक्षिणेन यदा शुक्रो व्रजत्येतेषां समम् । मध्यम वर्षमाख्याति समे बीजानि वापयेत् ॥ ५८

*निष्पद्यते तथा शस्यं मन्देनाप्यथ वारिणा । जरद्गवपथश्चैव खारी द्वादशिका भवेत् ॥ ५९

एतेषामेव मध्येन यदा गच्छति भार्गवः । तदाऽपि मध्यमं वर्षं मीपर्तं पूर्वो[21] विशिष्यते ॥ ६०

सर्वं निष्पद्यते धान्यं न व्याधिर्नापि चेतयः । खारी तदाऽष्टिका ज्ञेया सा वीथी सारसंज्ञिता ॥ ६१

एतेषामेव[24] यदा शुक्रो व्रजत्युत्तरतस्तदा । मध्यमं सर्वमाचष्टे नेतयो नापि व्याधयः ॥ ६२

निष्पत्तिः सर्वधान्याना भयं चात्र न मूर्च्छति[26] । खारीचतुष्क विज्ञेय वृषवीथीति संज्ञिता ॥ ६३

अभिजिच्छ्रवणं चापि धनिष्ठा वारुण तथा । रेवती भरणी चैव तथा भाद्रपदाऽश्विनी ॥ ६४

‡निषयास्तदा विपद्यन्ते खारी विन्द्याच पञ्चिका । ऐरावणपथो ज्ञेयो श्रेष्ठं एवं प्रकीर्तितः ॥ ६५

ए[ते]षा[29] यदा दक्षिणतो भार्गवः प्रतिपद्यते । षड्द्रक तदा विंद्यात् महा(हद्)धान्य स्थले वपेत् ॥ ६६

जलजानि तु शोभन्ते ये च जीवन्ति वारिणा । खारी तदाष्टिका ज्ञेया गजवीथीति[30] संज्ञिता ॥ ६७

---

1 A सौण्डिका । 2 C हुर्वरा । 3 A पौण्ड्र, B पोण्ड्राः । 4 A भेद°; B भद्र°; C वार्द° । 5 B मनूतभा ; C D मधुरभाः । 6 A सम्प्यानां; B सौम्यानां । 7 C D शुभ° । 8 A °वारुणम् । 9 D °नुराधात् । 10 B C तज्जात; D ते ज्ञात । 11 C भूक्षा° । 12 B सन्ध्यानो; C सायानां; D सन्ध्यानां । 13 A पीड्यन्ते । 14 C भाग्मोरा । 15 A °नाशा । 16 A B विनाशकम्; D विनाशिकः । 17 A C शुद्ध । 18-19 C न च वपेत्तदा । * A This is not found in this Ms 20 A द्वपि । 21 A पूर्वात् । † C This second half and the next stanza are missing in this Ms 22 A स । 23 A सा च । 24 A संज्ञता । 25 A B C एतासम । 26 C शुद्धनि । ‡ C This st. follows the next st. in this Ms. 27-28 A सहायच । 29 A एषा । § D This st. is not found in this Ms 30 C वाजवीथी ।

ए(ते)पामेव तु मध्येन यदा याति[1] तु[2] भार्गवः । स्थलेपूप्तानि[3] बीजानि जायन्ते निरुपद्रुतम्[4] ॥ ६८
*निचयांश्च विनश्यन्ति सारी द्वादशिका भवेत् । दानशीला नरा हृष्टा नागवीथीति संज्ञिता ॥ ६९
ए[ते]षामेव यदा शुक्रो व्रजत्युत्तरतस्तदा । स्थले धान्यानि जायन्ते शोभन्ते जलजानि[5] वा ॥ ७०
सर्वोत्तरा नागवीथी सर्वदक्षिणतोऽग्निजी । गोवीथी मध्यमा ज्ञेया मार्गांश्चैव त्रयः स्मृताः ॥ ७१
उत्तरे उत्तरं विन्द्यान्मध्यमे मध्यमं फलम् । दक्षिणे तु जघन्यं स्याद् भद्रबाहुवचो यथा ॥ ७२
†यत्रोदितश्चै विचरेन्नक्षत्रं मार्गवस्तथा । नृपं पुरं धनं[12] मुख्यं पशुं हन्याद्विलम्बकः ॥ ७३
आदित्ये विचरेद्रोगं मार्गेऽतुल्यामयं भयम् । गर्भोपघातं कुरुते ज्वलनेनाविलम्बितम्[13] ॥ ७४
इ(ई)ति[14]-व्याधि-भयान् घोरान् कुरुते तत्[15] प्रकोपनम्[16] । प्रविशन् भार्गवः सूर्ये जिह्मनाथ विलम्बिना ॥ ७५
¶प्रथमे मण्डले शुक्रो विलम्बी डमरायते[17] । पूर्वापरा दिशो हन्यात्पृष्ठे तेन विलम्बिना ॥ ७६
$द्वितीये मण्डले शुक्रश्चिरगो मण्डलेरितः[18] । हन्यादेशान्[19] धनं[20] सोयं सकलेन विलम्बिना ॥ ७७
तृतीये चिरगो[21] व्याधिं मृत्युं सृजति भार्गवः । चलितेन विलम्बेन मण्डलोकाश्च या दिशः ॥ ७८
‖चतुर्थे विचरन् शुक्रो सैचो(?) हन्यात् सुधानकान्[23] । शर्वशे(शो)पं[25] च सृजते निम्दितेन विलम्बिना ॥ ७९
पञ्चमे[26] विचरन् शुक्रो दुर्भिक्षं जनयेत् तदा । हन्यात्तं मण्डलं देशं क्षीणेनाथ विलम्बिना ॥ ८०
यदा तु मण्डले षष्ठे भार्गवश्चिरगो भवेत् । तदा वं मण्डलं देशं हन्ति लम्बेन[27] पाशिना[28] ॥ ८१
हीने चारे[29] जनपदानतिरिक्ते नृपं वधेत्[30] । समे तु समतां विंद्याद्विषमे विषमं वदेत् ॥ ८२
कृत्तिकां रोहिणीं चित्रां मैत्रमैन्द्रं[31] तथैव च । वर्षासु दक्षिणाद्येषु[32] यदा चरति भार्गवः ॥ ८३
व्याधिश्चेति[33]श्चै दुर्वृष्टिस्तदा धान्यं[36] विनाशयेत्[37] । महार्घं[38] जनमारिश्च जायते नात्र संशयः ॥ ८४
एतेषामेव मध्येन **मध्यमं फलमादिशेत् । उत्तरेणोत्तरं[40] विन्द्यात् सुभिक्षं क्षेममेव च ॥ ८५
मघायां[41] च विशाखायां[42] वर्षासु मध्यमंस्थितैः । तदा संपद्यते सस्यं[45] समर्घं[46] च सुखं[47] शिवम् ॥ ८६
पुनर्वसुमाषाढां[48] च याति मध्येन भार्गवः । तदा व्याधिश्च वृष्टिश्च सर्वतः[51] समुदीर्यते ॥ ८७
आषाढां श्रवणं चैव यदि मध्येन गच्छति । ††स्कन्धे प्रसरा दृश्यन्ते पीड्यन्ते आर्यवासिनः ॥ ८८
‡‡प्राजापत्यमाषाढां च यदा मध्येन गच्छति । तदा व्याधिश्च चौराश्च पीड्यन्ते वणिजस्तथा[53] ॥ ८९

1–2 C गच्छति । 3 A स्थलेष्वमानि; C स्थलेवसानि; D स्थलेपूमानि । 4 B निरुपद्रवे, C निरुपद्रवाः D निरुपद्रवा । * C This st. follows the next one in this Ms. 5 A निचयान् । 6–7 A मर्गेषु उरतः । 8–9 B यानि नाशयेत् । 10 A असिता । † A यत्रोदितस्य चरिते । 11 C यात्रो- । 12 A B वनं । ‡ A मार्गमात्स्या सर्वभयम्; B मार्गमत्स्यावर्तभयम्; D मार्गमात्स्यारापी भयम् । 13 B विलम्बनेन; C विलम्बिनः; D विलम्बनम् । 14 B घृते । 15 A भन्त° । 16 A प्रकोपजम् । ¶ A This st. is not found in this Ms. 17 C तिमिरायते । $ C This st. is missing in this Ms. 18 A °रिता । 19–20 हन्यादेस वर्न; 19 B देशं; 20 B चेनं । 21 C चेवगो । ‖ This st. is missing in this Ms. 22 A सची; B सपी । 23 A समापिकाम्; B सधानकाः । 24 A चतु; D कासे । 25 A सोस । 26 C चतुर्थे । 27 C विलंबेन । 28 A पांशुनाम्; B पासिना; C पुंसन । 29 A वारे । 30 C वदेत् । 31 A मित्रं; C खलु । 32 A वृश्चि । 33–35 B C D चैवानावृष्टिः । 36 A चान्यं । 37 A विपद्यते । 38 D महार्घे । ** AB यदा गच्छति भार्गवः । 39–40 A B उत्तरे उत्तरं । 41 C D मघानां । 42 C D विशाखानां । 43–44 C मध्यगाच्छतः । 45 A missing in this Ms. 46 A समर्थं । 47 C सुखमं । 48 B °मषाढां; C मेघापाढा; D °मसाढां । 49 A B सुवृष्टिः; D सुवृष्टिं । 50 A B D विन्द्यात् । 51 A B D व्याधिः । †† A In this Ms. the second half is as follows:–तदा व्याधिषु चौराश्च स्कन्धे प्रचरा दृश्यन्ते ॥ In C it is as follows:–कुमाराश्चैव पीड्यन्ते अनार्याश्चांतवासिनः ॥ ‡‡ B this is not found in this Ms. 52–53 A वासिना सराम्; 52 C वणिजाः ।

चित्रामेव विशाखां[1] च याम्यमाद्रीं च[2] रेवतीम् । मंत्रे भ(भा)द्रपदां चैव याति[3] वर्षति भार्गवः ॥ ९०
*फल्गुन्यथ भरण्यां च चित्रवर्णस्तु भार्गवः । यदा तु विष्टेद् गच्छेद् वा ध्रुवं भाद्रपदे जलम् ॥ ९१
प्रत्यूपे पूर्वतः शुक्रः पृष्ठतश्च बृहस्पतिः । यदान्योऽन्यं स[4] पश्येत[5] तदा चक्रं प्रवर्त्तते ॥ ९२
धर्मा-ऽर्थ-कामा लुप्यन्ते संभ्रमो[6] वर्णसङ्करः । नृपाणां च समुद्योगो यतः शुक्रस्ततो जयः ॥ ९३
अवृष्टिश्च भयं घोरं दुर्भिक्षं च तदा भवेत् । आढकेन तु धान्यस्य[7] प्रियो भवति ग्राहकः ॥ ९४
†यदा च पृष्ठतः शुक्रः पुरस्ताच्च बृहस्पतिः । यदा लोक्यतेऽन्योन्यं सदैव हि फलं तदा ॥ ९५
कृत्तिकायां यदा शुक्रः विकृष्य प्रतिदृश्यते[8] । ऐरावणपथे यद् यत् तद् तद्[9] ब्रूयात् फलं तदा ॥ ९६
रोहिणीशकटं शुक्रो[10] यदा[11] समभिरोहति । चक्रारूढाः प्रजा ज्ञेया मह[12]द्भयं[13] विनिर्दिशेत् ॥ ९७
पौण्ड्र[14]-केरल-चोलाश्च[15] ज्येष्ठाश्च[16] करवा(हा)टकाः[17] । चौरा[18] विकल्पकाश्चैव[19] पीड्यन्ते तादृशेन यत्[20] ॥ ९८
प्रदक्षिणं यदा[21] याति[22] तदा हिंसति स[23] प्रजाः । उपघातं बहुविधं वा सर्वैः कुरुते भुवि[25] ॥ ९९
संव्याने[26]सुपसेयानो भद्रेयं[27](?)सोमे[28]शर्मणी । सोमं च सोमजं चैव सोमे[29]पाश्वं च हिंसति ॥ १००
वत्सौ[31] विदेह[32]जिह्वांश्च वसौ[33](?)मौमां[34]स्तथो[35] द्रर्गाः[36-37] । ‡पीड्यन्ते ये च तद्भक्ताः §संव्या[38]ने मारुते यथा ॥ १०१
अलङ्कारोपघाताय यदा दक्षिणतो व्रजेत् । सौम्ये सुराष्ट्रे च तदा वामगः परिहिंसति ॥ १०२
आर्द्रां हत्वा निवर्तेत यदि शुक्रः कदाचन । सङ्ग्रामास्तत्र जायन्ते मांस-शोणित-कर्दमाः ॥ १०३
¶तैलिकाः सौरिकाश्चाद्या[39] उष्ट्रा माहिषकास्तथा । ईर्पिंडी[40]ः क्रूरकर्माणः पीड्यन्ते तादृशेन यत् ॥ १०४
दक्षिणेन यदा गच्छेद् द्रोणमेघं तदा दिशेत् । ‖वामगो रुद्रकर्माणि भार्गवः परिहिंसति ॥ १०५
**पुनर्वसुं यदा रोहेद्गाश्च गोजीविनस्तथा । हासं प्रहासं राष्ट्रं च विदर्भान् दासकां[41]स्तथा ॥ १०६
शंवरान्[42] मणिबन्धांश्च[43] मानपण्डांश्च[44] वल्कलान् । पीडयेच्च महासुण्डान्[45] शुक्रस्तादृशेन यत् ॥ १०७
प्रदक्षिणे प्रयाणे तु द्रोणमेकं तदा दिशेत् । वामयाने तदा पीडां मृगास्तत्सर्वकर्मणाम् ॥ १०८
पुष्यप्राप्ते द्विजान्[47] हन्ति प्राज्ञांश्च[48] धनुं[49]शिल्पिनः । मरुण्डी धर्मिणः[51] आपि पीड्यन्ते चोत्तरायणाः[52] ॥ १०९

1 A B विशाखायां । 2 A C स° । 3 A B C यानि । * A फाल्गुन्यादौसुगएणे; B फाल्गुन्यांश्च भरणी; D फाल्गुन्यादां भरणी च । In B and D the first half of the st becomes the second half and vice versa. 4 A B तौ । 5 A पाश्यते; B पश्येतम्; D पश्येताम् । 6 B संभ्रमः । 7 A धान्यानि । † A This st. is missing in this Ms. 8 A B प्रतिपद्यते । 9 A missing in this Ms. 10 C चैव । 11 C शुक्रः । 12 A B D महा° । 13 A भय; B D भयानि । 14 A B D पाण्ड्य° । 15 B D °चौराः; C चेकाः । 16 C चेष्टाः । 17 C करनाटकाः । 18 C कावीराः । 19 C विकल्काः । 20 A चे; C नये । 21-22 A These two words are written twice in this Ms. 23 A B C सा । 24 C चरोमं । 25 B तु चा; D शुचिः । 26 A सत्त्योजम्; B सम्व्यानम्; C सव्यानम् । 27 A भद्रेयां; B भवेयं; C भद्रिय । 28 A माम । 29 C °कर्मिण. । 30 B सोमां° । 31 A वत्सा; C D वसा । 32 B विविदह°; C विदेहाः । 33 A °जिह्वाः; C पुष्प । ‡ B This quarter is not found in this Ms. 34 A च; D वत्साः । 35 A वतोमाः । 36-37 A वया दशः; D वया गताः । § B This quarter is also missing in this Ms. $ A सव्यानामारुद्दे यथा; B वस् मौमारुद्वेयथा । 38 C संघटति । 39 A B °श्चनाः । ¶ A B चातुण्डामासिकाश्चया । 40 B इर्पिंडः; C इर्पीडाः; D द्र्पीडाः । 41 B रौद्र° । ‖ C वामयाने तदा पीडा मृगास्सर्वविधर्मिणः । ** C This and the following three sts. are not found in this Ms. 42 A सविकाः; B ममिकाः । 43 A सवराम्; B सवराग । 44 A भतिमण्डाः; B तिसंवाः । 45 A स्थाना मण्डाश्च; D स्थानमंडार । 46 A महामण्डाः; B महामंडा । 47 A द्विजाः C प्राज्ञाश्च । 48 A B D प्रजाः । 49 A B D धन°; 48-49 C धनुःशिल्पानि । 50 A पुरंड; B D पुरंडा । 51 A गणकाः । 52 A चान्तरां पणाः; D चान्तराः पणाः ।

वंगा[1] दुकूलं[2](?)चाण्डालाः पार्वतेयाश्च[3] ये नराः । इक्षुमं(म)त्याश्च[4] पीड्यन्ते आर्द्रामारोहणं यदा ॥ ११०
पणीमीमरथीनां[5](?)तु शुक्रोऽश्लेषां यदाऽऽरूहेत् । वामगः सृजति व्याधिं[6] दक्षिणो हिंसति प्रजाः ॥ १११
मघानां दक्षिणं पार्श्वं[7] भिनत्ति यदि भार्गवः । आढकेन तदा धान्यं प्रियं विन्द्यादसंशयम् ॥ ११२
त्रिलम्बेन यदा तिष्ठेन् मध्ये भित्त्वा यदा मघाम्[*] । आढकेन हि धान्यस्य प्रियो भवति ग्राहकः ॥ ११३
[*]मघानामुत्तरं पार्श्वं भिनत्ति यदि भार्गवः । कोष्ठागाराणि[8] पीड्यन्ते धान्यार्थं[9]मुपहिंसति ॥ ११४
भाग्री[10] महान्तः[11] पीड्यन्ते ताम्रवर्णा[12]स्तदा नृपाः । प्रदक्षिणे विलम्बश्च महानुं[13] (महद्) त्पादयेज्जलम्[14] ॥ ११५
पूर्वाफाल्गुनीं सेवेत गणिकां रूपजीविनः । पीडयेद् वामगः कन्यामुग्रकर्माणं[15] दक्षिणः ॥ ११६
शबरान्[16] प्रतिलिङ्गानि पीडयेदुत्तरां गतः । वामगः[17] स्थाविरान्[18] हन्ति दक्षिणः [19]स्त्रीर्निपीडयेत्[20] ॥ ११७
काशानि[21] रेवती-हस्ते पीडयेद् भार्गवः स्थितः । दक्षिणेचोरघाताय वामश्चोरजयावहः[22] ॥ ११८
चित्रस्थं[23] पीडयेत् सर्वं विचित्रं गणितं लिपिम् । कोशलान्[24] मेखलान् शिल्पं धृतं कनकं[25]याणिजम् ॥ ११९
आरूढ[26]पल्लवान्[27] हन्ति[28] सि(शि)ठीन्ध्रं[29] स्वर्ण[30]कोशलान्[31] । मार्जार-नकुलांश्चैव[32] कक्षमार्गे च पीडति ॥ १२०
चित्रपूलां[33] चित्रपुरीं यावत्वसमथापि च (?) । वामगः सृजते व्याधिं दक्षिणो गणिकां[34] वधेत् ॥ १२१
स्वातौ[35] दशार्णांश्चेति सुराष्ट्रं[‡] चोपहिंसति । आरूढो नायकं हन्ति वामो[36] वातेऽस्तु[37] दक्षिणः ॥ १२२
विशाखायां समारूढो वामवासी[38] भवेत्तमः[39] । अर्थं[§] विन्द्यात् महापीडां[40] पीडयेदुशनास्तथा ॥ १२३
दक्षिणस्तु मृगान् हन्ति पक्षिणश्चलितो यतः[41] । अग्निकर्माणि[42] वामस्थो[43] हन्ति सर्वाणि भार्गवः ॥ १२४
मध्येन मण्डलं[44] गच्छन् विशाखामध्वजं नृपम् । उत्तरोऽरन्तिजान् हन्ति त्रैराज्यस्थांस्तु दक्षिणः ॥ १२५
अनुराधास्थितो शुक्रो यायिनः प्रस्थितान् वधेत्[47] । मर्दने च मिथो भेदं दक्षिणे [48]नं तु वामगः[49] ॥ १२६
मध्यदेशे[50] [51]तु दुर्भिक्षं जयं विन्द्यादुदये[52] तदः[53] । फलं[54] वाप्यन्ति[55] चारेण[56] भद्रबाहुवचो यथा ॥ १२७
ज्येष्ठास्थः पीडयेज्ज्येष्ठान् ईदवंकानक्षारपत्रिकान् (?) । मर्दना-रोहणे हन्ति मध्यदेशे[57] सर्वान् वधेत् ॥ १२८
दक्षिणः क्षेमकृज्ज्ञेयो वामगस्तु भयङ्करः । प्रशस्तवर्णो विमलः स विज्ञेयो सुखावहः ॥ १२९
हन्ति मूल-फलं मूले कन्दानथ वनस्पतिम् । औषध्यो (धी)र्मलयं चाऽपि माल्य-काष्ठोपजीविनः ॥ १३०

1 A वगाः । 2 A दमूल° । 3 B पर्वतेयाः; C तवैतोयाः । 4 A इमं क्षुमत्याः; B इक्षुमन्त्या; C इक्षुमंती च । 5 B वर्णा भीमवथीनां; C वक्षा भीमाचमेरः; D पर्णी भीमरथानां तु । 6 A not found in this Ms. 7 C भजेत् । * C This first half is missing in this Ms. 8 C °काराणि । 9 C A धन्यार्थम्; B धान्यार्थम् । 10 A ताम्र; C भ्रना । 11 A B महन्तः; C महंते । 12 A B °कर्णाः । 13-14 A B महदुत्पादयेद् । 15 A B D दुर्गकर्माणि । 16 C सविरां । 17 C missing. 18 A स्तु परान्; B C स्थावरान् । 19 B स्त्रीन्; C तृक्षि । 20 C मारयेत् । 21 B C D काशानि । 22 B भयावहः । 23 C चित्रस्थं । 24 A केसला; B कसला; C कासाला । 25 C गणि° । 26 C भारूढां; D आरूढः । 27 B °पुल्लवा; C सबरो; D पल्लवा । 28 A लेढि; B लोद्रा; D लोंद्रा । 29 A शिशिम°; B D तिमिलां । 30 C कोष° । 31 C °घसलान् । † C This second half is not found in this ms. 32 B कंश°; D कांश° । 33 A °तुल्या; B °चूला; D °स्पला । 34 B वणिजां । 35 A स्वातौ । ‡ A चतुराष्ट्रानुप हिंसति; B चतुराष्ट्रान् पहिंसति । 36 C वामे । 37 C वातोऽथ । 38 C वामावासि । 39 C भनं सर्वां । § C भनुरुध्या सुविथं च । 40 A मत्र । 41 B D भसहांच । 42 A B दक्षिणः । 43 A धनः । 44 A सप्ति° । 45 D वातस्थः । 46 B प्रचलान् । 47 A भजेत् । 48 C missing in this ms. 49 C समागमे । 50-51 C मध्येन खलु । 52-53 C भमेदवः । 54 C कर्क । 55 C वाप्यंत । 56 A वारे च । ¶ B मक्षक क्षारमद्रिकम्; C इक्षां कोशलाव्रजम् । 57 C मघान् ।

यदाऽऽरुहेत् प्रमर्देत कुटुंबोभूश्च[1] दुःखिताः (?)। कन्दमूलं फलं हन्ति दक्षिणो वामगो जलम् ॥ १३१
भूमि-जलचरान्[*] सर्वे आपाढस्थः[2] प्रपीडयेत्। शातकेशांश्च मरीश्च तालीरारोह-मर्दने ॥ १३२
दक्षिणः स्थावरान् हन्ति वामगो जलजं[3] जलम्[4]। मध्यगः सुप्रसन्नश्च भार्गवः सुखमावहेत् ॥ १३३
यं[†]दुत्तरासु तिष्ठेच पाञ्चालान् मालवत्रयान्। पीडयेन्मर्दयेद्रोहाद्विश्वासाद्देदकृत्तथा ॥ १३४
दक्षिणः स्थावरान् हन्ति वामगो भयमावहेत्। सुवर्णो मध्यमः स्निग्धो भार्गवः सुखमावहेत् ॥ १३५
अभिजित्स्थः[‡] कुरून् हन्ति कौरव्यान् क्षत्रियांस्तथा। नद्यश्च साधवश्चापि[5] पीड्यन्ते रो[6]ह-मर्दने[7] ॥ १३६
यदा प्रदक्षिणं गच्छेत् पञ्चकं कुरुमादिशेत्। वामतो गच्छमान (?) स्तु ब्राह्मणानां भयङ्करः ॥ १३७
सौरसेनांश्च मत्स्यांश्च श्रवणस्थः प्रपीडयेत्। वङ्गा-ङ्गं[8]-मगधान् हन्यादारोहण-प्रमर्दने ॥ १३८
दक्षिणे श्रवणं गच्छेद् द्रोणमेघं निवेदयेत्। वामगस्तूपघाताय नृणां च प्राणिनां तथा ॥ १३९
धनिष्ठास्थो धनं हन्ति समृद्धांश्च कुटुम्बिनः। पाञ्चालान् सु(सौ)रसेनांश्च मत्स्यानारोह-मर्दने ॥ १४०
दक्षिणो धनिनो हन्ति वामगो व्याधिकृद् भवेत्। मध्यगः सुप्रसन्नश्च संप्रशस्यति[9] भार्गवः[10] ॥ १४१
शलाकिनः[11] शिलाकृतान्[12] वारुणस्थः प्रहिंसति। कालाकूटान् कुनाटांश्च हन्यादारोह-मर्दने ॥ १४२
दक्षिणो नीचै[13]कर्माणि हिंसते नीचकर्मिणः। वामगो दारुणं व्याधिं ततः सृजति भार्गवः ॥ १४३
यदा भाद्रपदां सेवेत् धूर्त्तान् दूतांश्च हिंसति। मलयान्मालवान् हन्ति मर्दना-रोहणे तथा ॥ १४४
दूतोपजीविनो वैद्यान् दक्षिणस्थः प्रहिंसति। वामगः स्थावरान् हन्ति भद्रबाहुवचो यथा ॥ १४५
उत्तरां[14] तु[15] यदा सेवेज्जलजान्[16] हिंसते सदा। वत्सान् वाल्हीकगान्धारनारोहण-प्रमर्दने ॥ १४६
दक्षिणे स्थावरान् हन्ति वामगः स्याद् भयङ्करः। मध्यमः सुप्रसन्नश्च भार्गवः सुखमावहेत् ॥ १४७
भयांतिकं[17] नागराणां[18] नागरांश्चोपहिंसति। भार्गवो रेवतीप्राप्तो दुःप्रभं[19]श्च[20] कृशो यदा ॥ १४८
मर्दना-रोहणे हन्ति नाविकानथ नागरान्[§]। दक्षिणे[22] गोपिकान्[23] हन्ति उत्तरे[24] भूषणानि तु ॥ १४९
हन्यादश्विनीप्राप्तः सिन्धु-सौवीरमेव च। मत्स्यान् कुनटान् रूढो[25] मर्दमानश्च हिंसति ॥ १५०
अश्व-पण्योपजीविनो दक्षिणो हन्ति भार्गवः। तेषां व्याधिं तथा मृत्युं सृजत्यथ तु भार्गवः ॥ १५१
भृतृ(ति)करान्[26] यवनांश्च भरणीस्थः प्रपीडयेत्। किराती[27]न्मद्रदेशाना[28]भीरा[29]न्मर्द-रोहणे ॥ १५२
प्रदक्षिणं प्रयातस्य द्रोणं मेघं निवेदयेत्[30]। वामगः संप्रयातस्य[31] रुद्रकर्माणि हिंसति ॥ १५३
एवमेतत् फलं कुर्यादनुचारं[32] तु भार्गवः। पूर्वतः पृष्ठतश्चापि समाचारे तु वक्ष्यु[34] ॥ १५४
उदये च प्रवासे च ग्रहाणां कारणं रविः। प्रवासे[35] छादयन्कुर्यात् शुक्रमानस्तथोदयम् ॥ १५५
प्रवासाः पञ्च शुक्रस्य पुरस्तात् पञ्च पृष्ठतः। मार्गे[37] तु[38] मार्गसन्ध्याश्च चक्रे वीथीषु[39] निर्दिशेत् ॥ १५६

---

1 B कुंद°; C कुटुं। * A B D वामभूमिजलेचरान्। 2 A सुर्यस्य; B चत्पर्यांश; D चत्पर्यांश। 3-4 भयामावहेत्। † A महति उपभयङ्करः B समन्युः पंचसंकर.; ‡ C This and the following st. are missing in this ms. 5 C मत्स्यः। 6 C रोम°। 6-7 C रोमदर्शने। 8 D वङ्गान्। 9 C D सुप्रशंस्यानि। 10 A missing in this ms. 11 A शलाकिना। 12 A शल्यकृता; C शिल्पकृत। 13 C नील°। 14 A B उत्तरा। 15 A not found in this ms. 16 A B D जलजं। 17-18 A B D संजातनागरिकानां। 19-20 C दुष्प्रवलं। 21 A पुरन्तरम्; B पुरंतनम्; D पुराम्बरम्। 22 A दक्षिण; C D दक्षिणो। 23 C गोमर्दी। § A नाविका न पुरंवरम्। 24 C वत्सान्। 25 A रूपः। ·. C अश्वरत्नाश्वव्यापारांश्च, D अश्वस्य पुष्पोपजीविनः। 26 B भक्तिकरान्; C कृत्तिकास्थः; D भर्तृकरांश्च। 27 B विराती। 28 A B महाराजान्; D मधुराजान्। 29 A भीवन; B नाभीन्। 30 C निपातयेत्। 31 C सुप्रयातः। 32 B सद°। 33 A B दुदुचारा, D दुदुचारा। 34 चक्ष्यः; C वक्ष्युम्। 35 A महाणां। 36 A प्रादनं। 37-38 C मार्गेषु। 39 C वीथीति।

त्रैमासिकः प्रयासः स्यात् पुरस्ताद् दक्षिणे[1] पथि। पञ्चसप्ततिर्मध्ये स्यात् पञ्चाशीतिस्तथोत्तरे ॥ १५७
चतुर्विंशत्यहानि स्युः पृष्ठतो दक्षिणे पथि। मध्ये पञ्चदशाहानि पडहान्युत्तरे[2] पथि ॥ १५८
ज्येष्ठा-नुराधयोश्चैव द्विमासं[3] पूर्वतो विदुः। अपरेणाष्टरात्रं तु तौ च सन्ध्ये स्मृते[4] बुधैः[5] ॥ १५९
मूलादिर्दक्षिणो मार्गः फाल्गुन्यादिषु मध्यमः। उत्तरश्च भरण्यादिर्जघन्यो मध्यमोऽन्तिमौ ॥ १६०
वामो[6]ऽथ दशकां[7] सारीं विंशकां[8] त्रिंशकामपि[9]। करोति नागवीथीस्थो[10] भार्गवश्चारमार्गितः[11] ॥ १६१
विंशका त्रिंशका सारी चत्वारिंशतिकाऽपि वा। वामे शुक्रे तु विज्ञेया गजवीथीमुपागते ॥ १६२
ऐरावणपथे त्रिंशच्चत्वारिंशदथापि वा। पञ्चाशीतिकी[14] ज्ञेया[15] सारी तुल्या[17] तु भार्गवः ॥ १६३
विंशका त्रिंशका सारी[13] चत्वारिंशतिकाऽपि वा। वामगो[18] वीथिमागम्य करोत्यर्थं[20] च[21] भार्गवः ॥ १६४
चत्वारिंशत् पञ्चाशद् वा पष्टिं चाऽर्थं[22] समादिशेत्[24]। जरद्गवपथं प्राप्ते भार्गवे त्वारिसंज्ञया[25] ॥ १६५
सप्ततिं चाथ चाऽशीतिं नवतिं वा तथा दिशेत्। अजवीथीगते शुक्रे भद्रबाहुवचो यथा ॥ १६६
शतिका द्विशता सारी त्रिशता वा यदा भवेत्। मृगवीथीमुपागम्य विवर्णो भार्गवो यदा ॥ १६७
विष्ठिक्रविषं (विस)मृणालं नं चं पुष्पं फलं यदा। वैश्वानरपथं प्राप्तो[33] यदा वामस्तु भार्गवः ॥ १६८
तेषां विजयमाख्याति प्रतिलोमः पराजयम्। उदयास्तमने[35] शुक्रो बुधश्च कुरुते यदा ॥ १६९
मार्गमेकं समासृत्य सुभिक्ष-क्षेमदस्तदा। यस्य देशस्य नक्षत्रं शुक्रो हन्याद्विचारगैः ॥ १७०
तस्मात् भयं परं विन्द्याच्चतुर्मासं न चापरम्। शुक्रोदये ग्रहो याति प्रवासं यदि कश्चनः ॥ १७१
क्षेमं सुभिक्षमाख्याति महद् वर्षं च तत्तथा। मलक्षोभो भवेच्छ्यामे मृत्युः[37] कपिल-कृष्णयोः[38] ॥ १७२
नीले गवां[39] तु मरणं रूक्षे वृष्टिक्षयः क्षुधा। वाताक्षिरोगो माञ्जिष्ठे पीते शुक्रे ज्वरो भवेत् ॥ १७३
कृष्णे[41] विचित्रे वर्णे च क्षयं[42] लोकस्य निर्दिशेत्। नभस्तृतीयभागं च आरुहेत्त्वरितो यदा ॥ १७४
नक्षत्राणि च चत्वारि वा(मा)साभ्यामारुहेच्चरेत। एकोनविंशर्क्षाणि[45] मासानष्टौ[46] च भार्गवः ॥ १७५
चत्वारि पृष्ठवश्चारं[47] प्रवासं कुरुते ततः। द्वादशैकोनविंशद्वा द्वादशाहं च भार्गवः ॥ १७६
एकैकस्मिन् नक्षत्रे चरभांणोऽप्यतिष्ठति[49]। मध्यमार्गेषु सप्ताहं समक्षेत्रे दशाहिकम् ॥ १७७
शेषेषु पृष्ठतो विन्द्यात् एकविंशमहोनिशम्।
§[ पूर्वतः समचारेण पञ्च पक्षेण भार्गवः ॥ ]
पञ्चाहं[52] इति ऋक्षाणि भद्रबाहुवचो यथा ॥ १७८

---

1 C दक्षिणो। 2 B षोडशान्युत्तरे; C षडहान्युत्तरे। 3 C द्वे मासे। 4-5 A D स्मृताबुभौ; C द्विधा मतौ। 6 C वामाको। 7 A स्वामः। 8 C दशिकाम्। 9 C विंशति। 10 C शतिकाम्। 10-11 C नागवीथीषो। 12 A स्यात्। 13 A C °मागतः। 14 A मर्षणा°। 14-15 C पञ्चाशीतिं। 16 C कुरुते। 17 A C °मूर्व्यं। 18 C चैव। * C श्यामागोयी; विरतोग्य। 19 A वामे गो°। 20-21 A मार्यण; B मैत्रण, D मर्वेण। 22-24 A षणामादिशेत्; B षा केणमादिशेत; D वा थथाऽऽदिशेत्। 25 A चरगेन; B चरगम°। 26 A संज्ञया, B संचया। 27 A C °वृष°। 28 A न। 28-29 B सप; D सर्वं य। 30 C These two letters are missing in this Ms. 31 A These two letters are missing in this Ms., C श्यामाः। 32 A षेत्रय°; C विषयम्। 33 B °मनो; D मनं। 34 A B D हन्ति। 34 A °वर्णयो; B °डस्याद्यो.; C °विमदे। 35 A B D मविकालमः। 36 C वातु°। 37 A B D सत्युम्। 43 A वर.°; B नामः; 39 A वां; C गवां, D गंवां। 40 B सये; C सर्वे। 41 B रूक्षे। 42 C षय। 45 A मवानि; C विंशति। D मरः। † C महद्भुणुदिता यदा। 44 A एकोनविंशः; C एकविंशति। 49 B च निष्ठते। 46 A मास्ये। 47 C चारं। ‡ C द्वादशाहोऽष्टविंशाप्या। 43 A चरमाय; B चामानः। § A B D This second half is additionally found in these Mss. but as it is not fitting contextually, I placed it in rectangular brackets. 50 C मध्यचारेषु। 51 C मेषेषु। ¶ C एकविंशाहदानिशः। 52 C पञ्चाम। 53 C भाक्षाणि।

ततः पञ्चदशर्क्षाणि[1] सुरत्यसरत्युंशनाहतैः[2] (?)। पञ्चभिर्मासैस्ततो ज्ञेयः प्रवासः पूर्वतः पुनः ॥ १७९
द्वांदशेति[4] षडशीतिश्चतुरशीतिर्भार्गवः। भक्तं समेषु मार्गेषु प्रवास कुरुते समम् ॥ १८०
द्वादशाहं च विंशाह् दशपञ्च च भार्गवः। नक्षत्रे तिष्ठते त्वेवं समचारेण पूर्वतः ॥ १८१
पांशुवातो रजो धूम शीतोष्ण[6] वा प्रवर्षणम्। विद्युदुल्काश्च कुरुते भार्गवोऽस्तमनोदये ॥ १८२
सितकुसुमनिभस्तु भार्गवः प्रचलति वीथीषु सर्वदेशशोकदः[8]। १८३
घट-गृह-जल-पोत[10] स्थितोऽभूद् बहुनरकैश्च ततः सुखदश्चारुः ॥ १८४
अत ऊर्ध्वं प्रवक्ष्यामि वक्र[12] चारं निबोधत[13]। भार्गवस्य[14] समासेन तथ्यं निर्ग्रन्थभाषितम् ॥ १८५
पूर्वेण विंश ऋक्षाणि[15] पश्चादेकोनविंशतिः। चरेत्[16] प्रकृतिचारेण सम[18] हीनातिरिक्तयोः[19] ॥ १८६
एकविंशं यदा गत्वा याति विंशतिम्[20] पुनः। भार्गवोऽस्तमने काले तद्वक्रं विकृतं[21] भवेत् ॥ १८७
प्रदह्य ग्राम-नगर लभते दृश्यतो व्रजेत्। धन-धान्यं च विविधं हरन्ति च दहन्ति च ॥ १८८
द्वाविंशतिं यदा गत्वा पुनरायाति विंशतिम्। भार्गवोऽस्तमने काले तद्वक्रं[22] शोभनं भवेत् ॥ १८९
§क्षिप्रमोदं धैं यक्ष्व पल्वला औषधीस्तथा। ह्रदाँ नदीश्च कूपाश्च ||शोपयत्युशनाहतम् ॥ १९०
त्रिविंशतिं यदा गत्वा पुनरायाति विंशतिम्। भार्गवोऽस्तमने काले तद्वक्र दीर्घमुच्यते ॥ १९१
गृहाणि वनखण्डाश्च दहत्यभिरभीक्ष्णशः। दिशो वनस्पतींश्चापि रविर्दहति रश्मिभिः ॥ १९२
एतानि त्रीणि वक्राणि कुर्यात् पूर्वेण भार्गवः। इमाश्च(नि)पृष्ठतो विन्द्यात् वक्राणि शुक्रस्य सर्वतः ॥ १९३
विंशतिं तु यदा गत्वा पुनरेकोनविंशतिम्। भौयात्यस्तमने काले वायव्यं वक्रमुच्यते ॥ १९४
वायुवेगसमां विन्द्यान्महीं वातसमाकुलाम्। छिद्रं माल्येन जालेन जनेनैन्येन सर्वशः ॥ १९५
एकविंशर्मि यदा गत्वा पुनरेकोनविंशतिम्। यायात्यस्तमने काले भस्म तद् वक्रमुच्यते ॥ १९६
ग्रामाणां नगराणां च प्रजानां चैं दिशो[33] दिशम्। नरेन्द्राणां च चत्वारि भस्मभूतानि निर्दिशेत् ॥ १९७
एतानि पञ्च वक्राणि कुरुते यानि भार्गवः। अतिचार प्रवक्ष्यामि फलं यथास्य किञ्चनं ॥ १९८
यदाऽतिक्रमते चारमुशनां दारुण फलम्। तदा सृजति लोकस्य दुःख-क्लेश-भयावहम् ॥ १९९
तदान्योऽन्यं तु राजानो[37] ग्रामाश्च नगराणि च। समयुक्तानि धावन्ति नष्टकर्म[38]-जयार्थिनः ॥ २००
धर्मार्थ-कामा लुप्यन्ते जायते वर्णसंकरः। शस्त्रेण सक्षय विंद्यान्महीं जनगत[43] सदा ॥ २०१
मित्राणि स्वजनाः पुत्रा गुरुद्वेष्या जनास्तथा। वहन्ति प्राण-वर्णार्थं कुरुते साहसेन यत् ॥ २०२
विलीयन्ते[47] धैं राष्ट्राणि दुर्भिक्षेण भयेन च। चक्र[49] प्रवर्तते दुर्गं भार्गवस्यातिचारतः ॥ २०३

1 A सर्वाणि। 2 A सुरति, C समाचरेत्। 3 C गुह। * C Instead of this second half the following second half is found in this Ms तत्रे तिष्ठते चैव समाचारेण सर्वत ॥ † C This st and the next one are not found in this Ms 4 A द्वादशेति। 5 A सीत। 6 D मिते। 7 B D missing in these Mss 8 A सोदक। 9 A घट°। 10 A मोदक, B D मोदति। 11 B D बहुनरक, C बहुजहन°। 12 B शुक,° C D चक्र। 13 B मिवोदित। 14 C शरीरस्य। 15 A °रिक्षाणि। 16 A चार, C चारे। 17 A भहति°। 18 A B D सम। 19 C सीमातिरीक्षयो। † A B D एकविंशतिमहत्वा। 20 A B D द्वाविंशतितमम्। 21 C D विकृति। ‡ C लुप्यन्ते दस्युभिस्तदा। 22 C वक्र। § C तदायामाश्रतामस्त्र। 23 D स्व°। 24 B द्रुमाः। || C आशोष्या वै भवति तु। 25 C सीमम्। § C एक-द्वि-त्रीणि चत्वारि। 26 A कुरुते। 27 A चानि। 28 A शुक्रस्य। 28–29 C शुक्रतूप यतः। ¶ C This second half as well as three succeeding lines are not found in this Ms 30 D ऊनेन। 31 D मल्येन। 32 34 C विदिग्नादिशा। 35 B D मार्गव। 36 A मृजन्ता। 37 C राजानां। 38 C °धर्म°। 39 C °जय°। 40 B D °अर्थिभिः। 41 C सवान्। 42 B D महा°। 43–44 A महाजनपदागतम्। 45 A प्रतिषह्नांश्च; B °प्रतिवर्णाश्च; D प्रतिगुणाः। 46 C वे। 47–48 A B D विलीभवन्ति। 49 A C वक्र।

ततः स[*]शानभूतास्थि कृष्णभूता मही तदा । वसा-रुधिरसंकुला काक[1]-गृध्रसमाकुला ॥ २०४
[†]चक्राण्युक्तानि सर्वाणि फलं यच्चातिचारकम् । चक्रचारं प्रवक्ष्यामि पुनरस्तमनोदयात् ॥ २०५
वैश्वानरपथं प्राप्तः पूर्वतः प्रविशेद् यदा । षडशीतिं तदाऽहानि गत्वा दृश्येत पृष्ठतः ॥ २०६
[‡]मृग[2]वीथीमनुप्राप्तः प्रवासं यदि गच्छति । चतुरशीतिं[3] तदाऽहानि गत्वा दृश्येत पृष्ठतः ॥ २०७
अजवीथीमनुप्राप्तः प्रवासं यदि गच्छति । [§]अशीतिं षडहानि तु गत्वा दृश्येत पृष्ठतः ॥ २०८
[¶]जरद्गवपथप्राप्तः प्रवासं यदि गच्छति । [‖]सप्ततिं पञ्च वाऽहानि गत्वा दृश्येत पृष्ठतः ॥ २०९
[**]गोवीथीं समनुप्राप्तः प्रवासं कुरुते यदा । सप्ततिं[6] तु तदाऽहानि गत्वा दृश्येत पृष्ठतः ॥ २१०
[7]वृ[8]षवीथीमनुप्राप्तः प्रवासं कुरुते यदा । [††]पञ्चषष्टिं[10] तदाऽहानि गत्वा दृश्येत पृष्ठतः ॥ २११
ऐरावणपथं प्राप्तः प्रवासं कुरुते यदा । षष्टिं[11] तु[12] स तदाऽहानि गत्वा दृश्येत पृष्ठतः ॥ २१२
ग[13]जवीथीमनुप्राप्तः प्रवासं कुरुते यदा । पञ्चाशीतिं[14] त[15]दाऽहानि[16] गत्वा दृश्येत पृष्ठ[17]तः ॥ २१३
ना[18]गवीथीमनुप्राप्तः प्रवासं कुरुते यदा । प[19]ञ्चपञ्चाश[20]त्त[21]दाऽहानि ग[22]त्वा दृश्येत पृष्ठ[23]तः ॥ २१४
वैश्वानरपथं[24] प्राप्तः प्रवासं कुरुते यदा । चतुर्विंशत्त[25]दाऽहानि गत्वा दृश्येत पूर्वतः ॥ २१५
मृगवीथीमनुप्राप्तः प्रवासं कुरुते यदा । द्वाविंशतिं[27] त[28]दाऽहानि[29] गत्वा दृश्येत पूर्वतः ॥ २१६
[26]अज[30]वीथीम[31]नु[32]प्राप्तः प्रवासं कुरुते यदा । त[33]दा विंशति[34]रात्रेण पूर्वतः प्रतिदृश्यते ॥ २१७
जरद्गवपथं[35] प्राप्तः प्रवासं कुरुते यदा । त[36]दा सप्तद[37]शाहानि[38] गत्वा दृश्येत पूर्वतः ॥ २१८
गोवीथीम[39]नुप्राप्तः प्रवासं कुरुते यदा । चतुर्दश दशाहानि[40] गत्वा दृश्येत पूर्वतः ॥ २१९
वृ[41]षवीथी[42] मनुप्राप्तः प्रवासं कुरुते यदा । त[43]दा द्वादशरात्रे[44]ण गत्वा दृश्येत पूर्वतः ॥ २२०
ऐरावणपथं प्राप्तः प्रवासं कुरुते यदा । तदा स[45] दशरात्रेण पूर्वतः प्रतिदृश्यते ॥ २२१
[46]गजवीथीमनुप्राप्तः प्रवासं कुरुते यदा । अष्टरात्रं तदा गत्वा पूर्वतः प्रतिदृश्यते ॥ २२२
[47]नागवीथीमनुप्राप्तः प्रवासं कुरुते यदा । षडहं तु तदा गत्वा पूर्वतः प्रतिदृश्यते ॥ २२३
एते प्रवासाः शुक्रस्य पूर्वतः पृष्ठतस्तथा । यथा शास्त्रे समुद्दिष्टा वर्ण-पाकौ[48] निबोधत ॥ २२४
शुक्लो नीलश्च कृष्णश्च पीतश्च हरितस्तथा । कपिलश्चाग्निवर्णश्च विज्ञेयः स्यात् कदाचन ॥ २२५

---

* A B D श्मशानभूता येनास्थि । 1 C °कंकाला । † A This quarter is not found in this Ms. ‡ B This st. is not found in this Ms. § D This st. is not found in this Ms. 2 C भाग° । 3 C षष्टिं तु । 3 C षष्टिं तु तदाहानि; । ¶ B This st. precedes the last one in this Ms. 4 C एरावण° । ‖ C अशीति तु तदाऽहानि; D अनुप्राप्तः । 5 C गज° । 6 C अशीति । ** B This and the following three sts. are numbered as 218, 219, 220, and 221 in this Ms. 7–8 C रावणपथं प्राप्तः । †† A पंचहानि मनुर्वेनि प्रवासं कुरुते यदा 9–10 A षष्टिं तु स । §§ C गोवीथीम-नुप्राप्तः । 11–12 C सप्तति । 13 C वृष° । 14–16 C तदा सप्तदशाहानि । 17 C पूर्वतः । 18 C अज° । 19–20 A चतुर्विंशत् । 19–22 C तदा सप्तदशाहानि । 23 C पूर्वतः । 24 B This st. is numbered as 215 in this Ms. C गोवीथीं । 25 B द्वाविंशतिं; C चतुर्दश । 26 A This st. is missing in this Ms. 27–29 C तदा द्वादशरात्रेण । 30 A अथ । 30–32 C ऐरावणपथं प्राप्तः । 33–34 C तदा तु दश । 35 C गजवीथीमनु° । 36–38 C अष्टरात्रं ततो । 39 C नागवीथीम् । 40–42 B अष्टरात्रं तदा; C षडहं तु तदा । 43 B गज°; 43–44 C जरद्गवपथं; D ऐरावणपथं । 45–46 B अष्टरात्रं तदा; 46 C सप्तदशाहानि । 47 A missing in this Ms. †† B C This and the following st. are not found in these Mss. ‡‡ D This st. is doubly written in this Ms. once with the second half of the last st. 48 B °पाकः; D पक्षौ ।

हेमन्ते शिशिरे रक्तः शुक्रः सूर्यप्रभानुगः । पीतो वसन्त-ग्रीष्मे च शुक्लः स्यान्निलसूर्यतः[1] ॥ २२६
अतोऽन्य येऽन्यथाभावा विपरीता भयावहाः । शुक्रस्य[4] चतुरो[5] श्लोके[6] कृष्णे नक्षत्रमण्डले ॥ २२७
पूर्वोदये फल यत् तु पच्यते[9]ऽपरतस्तु तत् । शुक्रस्यापरतो[10] यत्तु पच्यते[11] पूर्वतः फलम् ॥ २२८
एवमेव विजानीयात् फल-पाकौ[12] समाहितः[13] । कालातीत यदा कुर्यात् तदा घोर समादिशेत् ॥ २२९
सयक्चार यो वेत्ति[14] शुक्रचार स बुद्धिमान् । श्रमणो[15] स सुखं याति क्षिप्र[16] देशमपीडितम्[17] ॥ २३०

यदाऽग्निवर्णो रविसस्थितो वा[18] वैश्वानर[19] मार्गसमाश्रितस्य[21] ।
तदा भय शसति सोऽग्निजात तज्जातज साधयितव्यमन्यतः ॥ २३१

## इति नैर्ग्रन्थे श्रीभद्रबाहुके निमित्ते शुक्रचारो नाम पञ्चदशमोऽध्यायः समाप्तः ॥

—ooOoo—

अथातः परं शनैश्चरचार प्रारभ्यते लोकहितेच्छया ॥

अतः पर प्रवक्ष्यामि शुभा-ऽशुभविचेष्टितम् ।
यच्छ्रुत्वाऽनहितः प्राज्ञो भवेन्नित्यमतन्द्रितः ॥ १

प्रवासमुदय[26] चक्र गतिं वर्णं फल तथा । शनैश्चरस्य वक्ष्यामि यथावदनुपूर्वशः ॥ २ (C-1)
प्रवास दक्षिणे मार्गे मासिक मध्यमे पुनः । दिवसौ. पञ्चविंशतिस्तयोर्विंशतिरुत्तरे ॥ ३ (C-2)
चारगतो[33] यदा भूयः सन्तिष्ठति महाग्रहः । एकोत्तरेण चक्रेण भौमवत् कुरुते फलम् ॥ ४ (C-3)
संवत्सरमुपस्थाय नक्षत्र विप्रमुञ्चति । सूर्यपुत्रस्ततश्चैव प्रजाना[37] हितकाम्यया ॥ ५ (C-4)

द्वे नक्षत्रे यदा सौरिर्वर्षेण चरते यदा ।
राज्ञामन्यो[37]ऽन्यभेदश्च शस्त्रकोपश्च जायते ॥ ६ (C-5)

दुर्गं भवति संत्रासो मर्यादा च विनश्यति ।
वृष्टिश्च विषमा ज्ञेया व्याधिकोपश्च जायते ॥ ७ (C-6)

यदा तु त्रीणि[40] चत्वारि[41] नक्षत्राणि शनैश्चरः ।
मन्दवृष्टिं च दुर्भिक्षं शस्त्र व्याधिं च निर्दिशेत् ॥ ८ (C-7)

चत्वारि वा यदा गच्छेन्नक्षत्राणि महाद्युतिः ।
तदा युगान्त[42] आनीयाद् यान्ति मृत्युमुखं प्रजाः ॥ ९ (C-8)

उत्तरे पथिको मार्गे यदेषो[45] नीलता[46] व्रजेत्[47] ।
स्निग्धं तदा फल[48] ज्ञेय[49] नागर[50] जायते[52] वधी ॥ १० (C-9)

---

1 C °श्वयः । 2 BD समन्त । 3 C नृपतिश । 4 AC अयो । 5 C श्लो । 6 C गुरु । 7 C चा । चरते । 8 C यत्र । 9 C शाप्यते । 10 C स्य पुरतो । 11 C ते सखे । 12 A B °पाक, C °गुरु । 13 C समासत: । 14 A नवनि । 15 A B C श्रवण । 16 C क्षिप्र । 17 C सपदितम् । * D This st. is not found in this Ms । 18 A not found । 19-21 C वैश्वानरमार्गेण समाश्रितस्य, 21 A °समाश्रितस्य । 22 A क्ति । † B C D not found in these Mss । ‡ C not found in this Ms । 23 A कृत्वा । 24 B D च हित । 25 A °तुर, B भविद्धित । 26 A प्रविवासुदय । 27-28 B शुभाशुभविचेष्टितम् । 29-30 C These two words are not found in this Ms 31 C पञ्चविंशतिम् । 32 A B विरागत, D विरागत । 33 A B D एकान्तरण । 34 A चक्रेण । 35-36 A B D गौतम नाम शनैश्चर । 37 C राष्ट्रमान्य । 38-39 A आत्मभा, 39 C विषया । 40-41 C चरते त्रीणि । 42 B युग । 43 D आनी । 44 B यथा । 45 A B D यदि स । 46 A C D नीलवान् । 47 A D भवेत्; C व्रजन । 48-49 C फलमायन्त । 50 52 C नागराणां जयावहः ।

रविप्रधाना मोदन्ति[1] राजानस्तुष्टभूमयः ।
सं(स)मां मेघवतीं विद्यात् सर्वबीजप्ररोहिणीम् ॥ ११ (C-10)
मध्यमे तु यदा मार्गे[4] कुर्यादस्तमनोदयौ ।
मध्यमं वर्षणं सस्यं सुभिक्षं क्षेममेव च ॥ १२ (C-missing)
दक्षिणे तु यदा मार्गे यदि स नीलवा(वां) भवेत् (व्रजेत्) । (C-missing)
नागरा यायिनश्चापि पीड्यन्ते च भर्ताश्रयाः ॥ १३ (C-first half of 11 th)
गोपालं[6] पर्जयेत् तत्र दुर्गाणि च समाश्रयेत् । (C-second half of 11 th)
कारयेत् सर्वशस्त्राणि बीजानि च न वापयेत् ॥ १४ (C-1st half of 12 th)
प्रदक्षिणं तु ऋक्षस्य यस्य याति शनैश्चरः । (C-2nd half of 12th)
स च राजा विवर्धेत सुभिक्षं[10] क्षेममेव च ॥ १५ (C-1st half of 13 th)
अपसव्यं तु नक्षत्रं यस्य याति शनैश्चरः । (C – 2nd half of 13 th)
स च राजा विपद्येत दुर्भिक्षं भयमेव च ॥ १६ (C – 1st half of 14 th)
चन्द्रः सौरिं[12] यदा प्राप्तः परिवेषेण रुध्यते[14] । (C – 2nd half of 14 th)
अवरोधं[15] विजानीयान्नगरस्य महीपतेः ॥ १७ (C – first half of 15 th)
चन्द्रः शनैश्चरं प्राप्तो मण्डलं[17] चाऽनुरोहति[18] । (C – 2nd half of 15 th)
यमुनां राष्ट्रसौवीरं वारुणं(णीं) भजते[19] दिशम् ॥ १८ (C – 1st half of 16 th)
आय(न)र्ताः[20] सौरसेनाश्च दशार्णा द्वारिकास्तथा । (C – 2nd half of 16 th)
अ(आ)वन्त्या अपरान्ताश्च यायिनश्च ततो नृपाः ॥ १९ (C – 1st half of 17 th)
यदा वा युगपद् युक्तः सौरिमध्येन नागरैः[27] । (C – 2nd half of 17 th)
अन्योऽन्यभेदं जानीयान्नागराणां परस्परम् ॥ २० (C – 1st half of 18 th)
महात्मानश्च ये सन्तो महाभोगपरिग्रहाः । (C – 2nd half of 18 th)
उपसर्गं[28] निगच्छन्ति[29] धनं-धान्यं च वध्यते[31] ॥ २१ (C – 1st half of 19 th)
देशा महान्तो योधाश्च तथा नगरवासिनः । (C – 2nd half of 19 th)
ते सर्वेऽपतप्यन्ते वधे[34] सौरस्य वाहतो[35] ॥ २२ (C – 1st half of 20 th)
प्राची सौम्या प्रतीची च याम्या च दिशो यदा । (C – 2nd half of 20 th)
वाहिनीं यो जयेत्तासु नृपो दैवहतस्तदा ॥ २३ (C – 1st half of 21 st)
कृत्तिकासु च यद्यार्कि[32] विशाखासु बृहस्पतिः । (C – 2nd half of 21 st)
समन्ताद्दारुणं विन्द्यात् देवश्चात्र प्रवर्षति ॥ २४ (C – 1st half of 22 nd)

1 C मोदन्ति । 2–3 C तुष्टिसेव सद् । * C दक्षिणे च यदा मार्गे कुर्यादस्तमनोदये । 4 A missing in this Ms. 5 B चराः; C तत्र; D तट° । 6 C गोलण्य । 7 B वर्द्धयेत् । † C घोरं च यत्नं विधाय् सङ्कटे तत्र कारयेत् । 8 B वापयेत् । 9 A विपद्येत । 10 A दुर्भिक्षम् । 11 A C क्षेमम्; B भयम् । 12 A सौरं; C सौर; D सौरिं । 13 A परिवेषेण । 14 A सपति; B D रुध्यति । 15 B अवरोधे; C अंप्रमर्दं । 16 B D नागरस्य । 17 A B D मण्डली । 18 B चरोहति; C विरोहति । ‡ C यमुनां सराष्ट्रं सौवीरं वारुणी च भजेद्दशाम् । 19 A D भजते । 20 C नानता । 21 B ज्वरता । § B D दुर्गीवपरीताश्च । 22 B यायिनः । 23–24 D महाप्राणाः । 25–26 A युगपत्; C प्रागवद् । 27 A नागराः । 28 C उपसर्गाः । 29 C न गच्छन्ति । 30 A C भद्र° । 31 C वध्यते D वेध्यते । 32 C यार्कि । 33 A निर्दिशेत् । 34 C वधे । 35 C सौर ।

कीटाः पतङ्गाः शलभा वृश्चिका मूषकास्तथा । ( C – 2nd half of 22 nd )
अग्निश्चौरा बलीयांसस्तस्मिन् वर्षे न संशयः ॥ २५ ( C – 1st half of 23rd )
श्वेते सुभिक्षं जानीयात् पाण्डु-लोहितके भयम्[1] । ( C–2nd half of 23rd )
पीतो जनयते[2] व्याधिं[3] शस्त्रकोपश्च दारुणम् ॥ २६ ( C–1st half of 24th )
कृष्णे शुष्यन्ति सरितो वासवश्च न वर्षति । ( C–2nd half of 24 th )
स्नेहवानत्र गृह्णाति रूक्षैः[4] शोषयते[5] प्रजाः[6] ॥ २७ ( C–1st half of 25 th )
सिंहलानां किरातानां मद्राणां मालवैः[7] सह । ( C–2nd half of 25 th )
द्रविडानां[8] च भोजानां[9] कोंकणानां[10] तथैव च ॥ २८ ( C–1st half of 26 th )
क्षुपकानां[11] पुलिन्द्राणां पल्हवानां शकैः[12]सह । ( C–2nd half of 26 th )
यवनानां पुराणानां स्थावराणां तथैव च ॥ २९ ( C–1st half of 27 th )
अङ्गेयानां[13] सुराणां[14] च दस्यूनां च शनैश्चरः । (C–2nd of half 27 th )
एषां विनाशं कुरुते यदि पश्येत्[15] संयुगे ॥ ३० ( C–1st half of 28 th )
यस्य यस्मिं[16] तु[17] नक्षत्रे[18] कुर्यादस्तमनोदयौ । ( C–2nd half of 28 th )
तस्य देशान्तरे द्रव्यं हन्यते[19] यासिनं[20]श्च[21] ये[22] ॥ ३१ ( C–29 th; 1st half
शनैश्चरं चारमिदं[23] च[24] भूयो[25] यो वेत्ति[26] विद्वान् निभृतो[27] यथावत् । of 29th missing )
स[28] पूजनीयो[29] भुवि लब्धकीर्तिः[30] सदा[31] महात्मेव[32] हि[33] दिव्यचक्षुः[34] ॥ ३२

## इति नैर्ग्रन्थे भद्रबाहुके निमित्ते संहिते(तायाम्) शनैश्चरचारो नाम षोडशमोऽध्यायः ॥ ( C–30 th )

वर्णं गतिं च संस्थानं मार्गमस्तमनोदयौ[35] । गौतमस्य[36] प्रवक्ष्यामि यथा[37]वदनुपूर्वशः[38] ॥ १
मेचकः कपिलः श्यामः पीतः पाण्डुः स नीलवान् । रक्तश्च धूम्रवर्णश्च न[39] प्रशस्तो[40]ऽङ्गिरास्तदा ॥ २
मेचकश्चेद्वृतं[41] सर्वं[42] वसुं[43] पाण्डुर्विनाशयेत्[44-46] । पीतो व्याधिं भयं शिष्टे[47] धूम्राभश्च[48] सृजे[49]ज्ज[50]लम्[51] ॥ ३
*उपसर्पति[52] मित्रादि पुरतः स्त्री प्रपद्यते । त्रि[53]-चत्वारि च नक्षत्रैस्त्रिभिरस्तमनं व्रजेत् ॥ ४
कृत्तिकादिभगान्तश्च मार्गः[54] स्यादुत्तरः स्मृतः । अर्यमा[55]दिरथाप्यन्तो मध्यमो मार्ग उच्यते ॥ ५
विश्वादिसमयान्तश्च दक्षिणो मार्ग उच्यते । एते बृहस्पतेर्मार्गा नवनक्षत्रजास्त्रयः ॥ ६
मूलमुत्तरतो याति स्वातिं दक्षिणतो व्रजेत् । नक्षत्राणि तु[56] शेषाणि[57] समन्ता[58]द्दक्षिणोत्तरे ॥ ७
मूषके[59] तु यदा हस्तो[60] मूलं[61] दक्षिणतो व्रजेत् । दक्षिणतस्तदा विन्याद[62]न्योर्दक्षिणे[63] पथि[64] ॥ ८

1 C वयम् । 2 A B D व्याधि । 3 A D जनयति, B मरो याति । 4 C रुक्षः । 5 C रोषयते । 6 C प्रजाम् । 7 D मार्द्रवैः । 8 A B D द्रमिडानां । 9 A पुराणां च । 10 A स्थावराणाम् । 11 A चिबुकानां; B चुचुकानां; D चुच्युकानां । 12 A B D शनै । 13 C अङ्गेयाणां । 14 A D कुरूणां । 15 A चान्वेव; B C मर्दन । 16–18 C यदा वै जन्मनक्षत्रे । 19–22 C हन्यात्त चापि नाशयेत् । 23–24 C महर्थं । 25–27 C वेदुमिरवा नूरमः । 28–29 C सज्जनीयः । 30 C कीर्तिमांश्च । 31–34 C भवत्यसौ दिव्यदृष्ट महात्मनि । 35 मनोदयात् । 36 C चक्र फलं । 37–38 C गौतमस्य निबोधत । 39–40 C प्रभास्तस्तः । 41–43 C पैत्रिसासर्गं । 44–46 C वसुधानां विनाशकः । 47 C दुष्ट । 48–51 C मारुतः सजते फलम् । * C The whole stanza in this Ms. is as follows:–उपसर्पति मास हि पुनश्री प्रतिपद्यते । चरित्वा सलु नक्षत्री त्रीणि विक्षमनुचरेत् ॥ 52 B D उपसर्पन्ति । 53 A तृ । 54 A मार्ग । 55 A अयामा° । 56–57 A not found; B भुद्रोपाणि; 57 C शिष्टानि । 58 A समायात्; B समीयात्; D सामीयात् । 59 C प्रवके । 60 C मास्तः । 61 C वक्र । 62–64 C एपरे मो दक्षिणो पथः ।

अनावृष्टिहता देशा रूक्षज्वरविनाशिवाः । चक्रारूढाः प्रजास्तत्र पच्यंते[3] जातरां(सं)करा:[4] ॥ ९
यदा चोत्तरतः स्वातिं[6] दीप्तो यायाद् बृहस्पतिः । उत्तरेण तदा विन्याद् दारुणं भयमादिशेत् ॥ १०
लुप्यन्ते च क्रियाः सर्वा नक्षत्रे गुरुपीडिते । दस्यवः प्रबला ज्ञेया न[8] च[9] बीजं[10] प्ररोहति ॥ ११
*दक्षिणेन तु चक्रेण[11] पञ्चमे पञ्चमुच्यते । उत्तरे पञ्चके पञ्च मार्गे चरति गौतमः ॥ १२
ह्रस्वे[12] भवति दुर्भिक्षं निष्प्रभे[13] व्याधिजं भयम् । विवर्णे पापसंस्थाने मंदपुष्प-फलं भवेत् ॥ १३
प्रतिलोमानुलोमो वा पञ्चसंवत्सरो यदा । नक्षत्राण्युपसर्पेण[14] तदा सृजति[15] दुस्समम् ॥ १४
सस्यनाशो अनावृष्टिर्मन्युस्तीनाश्च व्याधयः । शस्त्रकोपोऽग्निमूर्च्छा च पड्विधं मूर्च्छने भयम् ॥ १५
सप्तार्धं यदि वाऽष्टार्धं पडर्धं निष्प्रभोदितः । पञ्चार्धं चाथवार्धं[17] च यदा[18] संवत्सरं चरेत्[19] ॥ १६
सङ्ग्रामा निरुदाराश्च[20] मेघाश्च[21] स्नेहदुर्बलाः । श्वेतास्थी पृथिवी भ्रान्ता क्षुधा-रोगैः कुवायुभिः[25] ॥ १७
पुष्यो यदा[26] द्विनक्षत्र(त्रे) सप्रभश्चरते समः । पड्[27] भयानि[28] तदा हत्वा[29] विपरीतं[30] सुखं[31] सृजेत्[32] ॥ १८
नृपाश्च विषमच्छायांश्चतुर्षु[34] वर्तते[35] हितम् । सुखं प्रजाः प्रमोदन्ते स्वर्गवत्[36] साधुवत्सलाः[37] ॥ १९
विशाखा कृत्तिका चैव मघा रेवतिरेव च । अश्विनी श्रवणश्चैव तथा भाद्रपदा भवेत्[38] ॥ २०
†हृदकानि जानीयात् सिष्ययोगसमप्रभे । फाल्गुन्यैव च चित्रा[39] च वैश्वदेवश्च मध्यमः ॥ २१
ज्येष्ठा मूलं च सौम्यं च जघन्या सोमसंपदा । कृत्तिका रोहिणी मूर्तिराश्लेषा हृदयं गुरुः ॥ २२
आप्यं आश्वयं च वैश्वं[40] च नाभिः पुष्य-मघाः स्मृताः । एतेषु च विरुद्धेषु ध्रुवस्य फलमादिशेत् ॥ २३
†द्विनक्षत्रस्य चारस्य यत् पूर्वं परिकीर्तितम् । एवमेवं[41] तु[42] जानीयात्[43] पड्[44] भयानि[45] समादिशेत् ॥ २४
इमानि यानि बीजानि विशेषेण विचक्षणः । व्याधयो मूर्तिघातेन हृद्रोगो हृदये हते[46] ॥ २५
पुष्ये हते हतं पुष्पं फलानि कुसुमानि च । आग्नेयी[47] मूषकाः सर्पा दावश्च[48] शलभाः शुकाः ॥ २६
‡विपश्च महाधान्ये जाते च बहुधा स्मृताः । स्वचक्रमीतयश्चैव परचक्रं निरन्तु च ॥ २७
अंतरन्तु च विशाखायां सोमे संवत्सरे विदुः । शेषं[49] संवत्सरे ज्ञेयं शारदं तत्र[50] नेतरम्[51] ॥ २८
मार्घमल्पोदकं विन्द्यात् फाल्गुने दुर्भगाः स्त्रियः । चैत्रे[53] चित्रं विजानीयात् सस्यं वोयं सरिद्वपाः ॥ २९
वैशाखे[54] नृपभेदश्च पूर्ववोयं विनिर्दिशेत् । ज्येष्ठा-मूले जलं[56] पश्चाद् मित्रभेदश्च जायते ॥ ३०

---

1 A क्षुत; B क्षुक; C क्षुधया । 2 B °विनाशनः; D °विनाशिनः । 3 D पच्यन्ते । 4 A D °तस्करा°; B तस्करी । 5 C चंद्रवतः । 6 C स्वाते । 7 B यथा; C याया । 8 C तत्र । 9-10 A B D बीजानि न । * C दक्षिणेन तु चक्रेण मध्यमे पंचपंचके । उत्तरे पंच मार्गे तु चरति गौतमो यदा ॥ 11 A चक्रेण । 12 A ह्रस्वे । 13 A सुप्रभे । 14 C अकल्पेत । 15 B स is additionally found between तदा and सृजति. । 16 B समम् । 17 C स्वंगुलार्द्धं । 18 C पौष्ण° । 19 A B D चरम् । 20 B D निरदा मेघाः; C श्च अनावृष्टिः । 21 BC तदा; D तदा । 22-24 BD स्नेहश्च दुर्बलः; C स्नेहश्च दुर्लभः । 25 C च पीड्यते । 26 A यद्वा; B D यदि वा । 27-28 C महद्भयं । 29 C गत्वा । 30 C विपरीतात् । 31 A C D सुखं । 32 B भजेत् । 33 C °च्छाया°; D °आच्छायाः । 34-35 C चतुर्थंचपर्यंतः । 36 C स्वर्गवत्सं । 37 C सुघस्थलाः । 38 C वदेत्; D च चेत् । 39 A B D मित्रा । 40 A भैत्रं । † D This st, is found missing in this Ms. *41-42 C एतत्तु । 43 C पीडायाम् । 44-45 C सदजानि । 46 B महत्; C भवेत् । 47 A अमेयाः । 48 C सहीनाः । † C अंतं भजति शाखायां सौम्यं संवत्सरे विदुः । D This first half has been erroneously considered as a whole stanza and hence anomaly in numbering in this Ms. 49 C शेषं । 50-51 C शरदहलवम् । ‡ C तावतामार-स्यमाद्धोत्यं; B This first half has been considered as a whole stanza in this Ms. and hence anomaly in numbering. 52 A माघ° । 53 ABD चैत्रं । 54 AD विशाखे, B विसा । 55 D नृ° । 56 A B D च ।

आषाढे तोयसंकीर्णं सरीसृपसमाकुलम् । श्रावणे दंष्ट्रिणश्चौरा व्यालाश्च प्रबलाः स्मृताः ॥ ३१
संवत्सरे भाद्रपदे शस्त्रकोपाभिमूर्च्छनम् । सरीसृपाश्चाश्वयुजे बहुधा वा भयं विदुः ॥ ३२
एते संवत्सराश्चोक्ताः पुष्यस्य चरतोऽपि वा । रोहिण्यार्द्रा तथाऽऽश्लेषा हस्तः स्वातिः पुनर्वसुः ॥ ३३
अभिजिच्चानुराधा च मूलो वासव-वारुणाः । रेवती भरणी चैव विज्ञेयानि बृहस्पतौ ॥ ३४
कृत्तिकायां गतो नित्यमारोहण-प्रमर्दने । रोहिण्यास्त्वभिघातेन प्रजाः सर्वाः सुदुःखिताः ॥ ३५
अभिघातस्तथाऽऽर्द्रायामाश्लेषायां विषाद्[10] भयम् । मन्दे हस्तपुनर्वस्वोस्तोयं[12] चौराश्च दारुणाः ॥ ३६
वायव्ये[13] वायवो[14] दुष्टा रोगदं[16] वाजिनां भयम् । अनुराधानुघाते च मैत्रीसिद्धिः[17] प्रहीयते[18] ॥ ३७
तथा मूलाभिघातेन दुष्यन्ते मण्डलानि च । वायव्यस्याभिघातेन पीड्यन्ते धनिनो[19] नराः ॥ ३८
वारुणे जलजं तोयं फलं पुष्पं च शुष्यति[21] । अकाराश्चाविकांस्तोयं पीडयेद्रेवती[24] हता ॥ ३९
वामं करोति नक्षत्रं यस्य दीप्तो बृहस्पतिः । लब्ध्वाऽपि सोऽर्थं विपुलं न भुञ्जीत[25] कदाचन ॥ ४०
प्रदक्षिणं तु नक्षत्रं यस्य कुर्याद् बृहस्पतिः । यायिनां विजयं विन्द्यान् नागराणां पराजयम् ॥ ४१
प्रदक्षिणं तु कुर्वीत सोमं यदि बृहस्पतिः । नागराणां जयं विन्द्याद् यायिनो च पराजयम् ॥ ४२
उपघातेन[28] चक्रेण मध्यगन्ता बृहस्पतिः । निहन्याद् यदि नक्षत्रं यस्य तस्य पराजयम् ॥ ४३
बृहस्पतेर्यदा चन्द्रो रूपं संछादयेत्[32] भृशम् । स्थावराणां वधं कुर्यात् पुरोधं च दारुणम् ॥ ४४
†स्निग्धप्रसन्नो[34] विमलोऽभिरूपो[35] महाप्रमाणो द्युतिमान् स पीतः[36] ।
गुरुर्यदा चोत्तरमार्गचारी सदा प्रशस्तः प्रतिपक्षहन्ता ॥ ४५

इति नैर्ग्रन्थे भद्रबाहुके निमित्ते संहितायाम् बृहस्पतिचारं नाम सप्तदशोऽध्यायः ॥

---

गतिं[38] प्रवासमुदयं वर्णं ग्रहसमागमम् । बुधस्य[39] संप्रवक्ष्यामि[40] फलानि[41] च निबोधत ॥ १
सौम्या विमिश्राः संक्षिप्तास्तीक्ष्णा घोरास्तथैव च । दुर्गा(उग्राश्च)गतयो[46] ज्ञेया बुधस्य च विचक्षणैः[49] ॥ २
सौम्यां गतिं समुत्थाय त्रिपक्षे[51] दृश्यते बुधः । विमिश्रायां गतौ पक्षे[52] संक्षिप्तायां षडूनके[53] ॥ ३
तीक्ष्णायां दशरात्रेण घोरायां तु पडाहिके[55] । पापिकायां त्रिरात्रेण दुर्गा(उग्रा)यां[57] सम्यगक्षये ॥ ४

1 A after these two letters there is a gap in this Ms. upto प्रबलाः स्मृताः । 2 D °ध्र्छनम् । 3-4 C चरतीवरे । 5 C °वाश्णे । 6-7 C विकृतायगतो । 8 A B मारो; D not found. 9 C समुत्पातः । 10 ABD विषाद् । 11 C मंदे° । 12 B चोपा; C तोय । 13 C मायवे । 14 A वायवी । 15 A दृष्टा; C दुष्टाः । 16 A रोगदं; C रोगदाः । 17 A क्षीसिद्धश्च; क्षीसिद्धिश्च । 18 C प्रजायते । 19-20 A B D धनिनो नराः । 21 B पुष्यति । 22 A आकाशान् । 23 A D पीडये । 24 D रेवी° । 25 A भुजते । 26 C यदि । 27 C याति । * C This line and the next line are not found in this Ms. । 28 A B D रूपघातेन । 29 B D वक्रेण । 30 C गत । 31 A B C बृहस्पतिः । 32 A संवादमे, B छादयेत; D संस्थाद्यते । 33 C These two letters are not found in this Ms. † C This st. is preceded by the following line in this Ms:-उपघातेन चक्रेण स्वनक्षत्रे तु पीडिते । 34 C missing. 35 A विरूपः; B °भतिरूपं; C हिसमो । 36 A D सपीतुः; C समपीतः । 37 AD प्रतिपक्ष°; B प्रतिपक्ष° । 38 A C D गति° । 39 C बुधचारं । 40 C प्रवक्ष्यामि । 41-42 C फलं चापि । 43-44 A अथ पापिका; B अथ यायिका; D द्वयायिकाः । 45 B दुर्गा च; D दुर्गो च । 45-46 C दुर्गो चिह्नातता ज्ञेया । 47-48 C बुद्धमेतां । 49 C विचक्षणः । 50 B D मुच्छाय; C समुच्छाय । 51 A पूपक्षा; C पक्षेसं; D पूपक्षा । 52 C मासे । 53 C द्विरूनके । 54 C ति । 55 C मदाहिके । 56 D पापकायां । 57 D दुर्गायां ।

सौम्याः विमिश्राः संक्षिप्ता बुधस्य गतयो हिताः । शेषाः पापाः समाख्याता विशेषेणोत्तरोत्तराः ॥ ५
नक्षत्रं[2] शक्वाहेनं[3](?)जहाति समचारतः[4] । एषोऽपि नियतश्चारो भयं कुर्यादतोऽन्यथा ॥ ६
नक्षत्राणि चरेत्पञ्च पुरस्तादुत्थितो बुधः । ततश्चास्तमितः षष्ठे सप्तमे दृश्यतेऽपरः ॥ ७
उदितः पृष्ठतः सौम्यश्चत्वारि[5] चरते[6] ध्रुवम् । पञ्चमेऽस्तमितः षष्ठे दृश्यते पूर्वतः पुनः ॥ ८
चत्वारि षट् तथाष्टौ च कुर्यादस्तमनोदयौ[7] । सौम्यायां तु विमिश्रायां संक्षिप्तायां[8] यथाक्रमम् ॥ ९
नक्षत्रमनुगृह्णाति[9] गतिभिस्तिसृभिर्यदा । पूर्वाभिः पूर्वसस्यानां तदा संपत्तिरुत्तमा ॥ १०
बुधो यदोत्तरे मार्गे सुवर्णः पूजितस्तदा । मध्यमे मध्यमो ज्ञेयो जघन्यो दक्षिणे[10] पथि ॥ ११
यद्युं[11] कुर्यादतिस्थूलं[12-13] ताम्रः शस्त्रप्रकोपनः । अणुश्चारुणवर्णश्च बुधः सर्वत्र पूजितः ॥ १२
पृष्ठतः पुरलम्भाय पुरस्तादर्थ[14]वृद्धये । स्निग्धो रूक्षो बुधो ज्ञेयः सदा सर्वत्रगो बुधः[15] ॥ १३
गुरोः शुक्रस्य भौमस्य वीथीं विद्याद् यथा बुधः । दीप्तोऽतिरूक्षः सङ्ग्रामं[19] तदा घोरं निवेदयेत् ॥ १४
भार्गवश्चोत्तरां वीथीं चन्द्रशृङ्गं च दक्षिणम् । बुधो यदा निहन्या[20]त्तानुभयो[21]र्दक्षिणापथे ॥ १५
राज्ञां[22] चक्रधराणां[23] च सेनानां[24] शस्त्रजीविनाम् । पौर-जानपदानां[25] च क्रियां[26] काचि[27]न्न सिध्यति ॥ १६
शुक्रस्य दक्षिणां वीथीं चन्द्रशृङ्गमथोत्तरम् । भिद्याल्लिखेत् तदा सौम्यस्ततो रोगा[28]ग्निजं भयम् ॥ १७
यदा[29] बुधो[30]ऽरुणाभः[31] स्यादुद्गो[32] वा निरीक्ष्यते । तदा स स्थावरान्[33] हन्ति ब्रह्म-क्षत्रं च पीडयेत् ॥ १८
चन्द्रस्य दक्षिणां वीथीं भित्त्वा[34] तिष्ठे[35]द्यदा[36] ग्रहः । रूक्षः[37] स काल[38]सङ्काशस्तदा[39] चित्र[40]विनाशनम्[41] ॥ १९
चित्रमूर्तिश्च चित्रांश्च शिल्पिनः[42] कुशीलांस्तथा[43] । तेषां च बन्धनं[44] कुर्यात्[45] मरणाय समीहते ॥ २०
भित्त्वा यदोत्तरां वीथीं दारुकाणो[46](?)ऽवलोकयेत् । सोमस्य चोत्तरं शृङ्गं लिखेद्भ(भा)द्रपदां वधेत्[47] ॥ २१
*शिल्पिनां दारुजीवीनां तदा षाण्मासिको वधः । अकर्मसिद्धिः कलहो मित्रभेदः पराजयः[48] ॥ २२
पीतो[49] यदोत्तरां वीथीं गुरुं भित्त्वा प्रलीयते । तदा चतुष्पदं गर्भो(र्भं) कोशं[50]धान्यं बुधो वधेत्[51] ॥ २३
†वैश्यश्च(श्यानाम्)शिल्पिनां चापि भयं भवति दारुणम् । सो नयेद्भवते मासं भद्रबाहुवचो यथा ॥ २४
विभ्राजमानो रक्तो वा बुधो दृश्येत कश्चनः । नागराणां च स्थिराणां च दीक्षितानां च तद्भयम् ॥ २५
कृत्तिकास्वुदितो रक्तो रोहिण्यां स क्षयङ्करः[52] । सौम्ये रौद्रे तथाऽऽदित्ये[53] पुष्ये[54] स(सा)र्पे बुधः[55] स्मृतः[56] ॥ २६
पितृदैवं[57] तथाऽऽश्लेषां फल्गुणो यदि सेवते । पितॄंस्ता[58]न् निहन्त्यां[59]श्च[60] सत्यं स भजतेऽनयोः ॥ २७

---

1 A पणे । 2 A नक्षत्रान् । 3 B °वाहेणै; C संतवाहेन; D तक्वादेन । 4 A D समचारवाम्; B समधारता । 5 C चरवारः । 6 C चरितः । 7 A B अनोदयः; C अनोदयात् । 8 A संक्षप्ते । 9 A °मन्यविन्हाति; B अन्यविह्नाति; D अभ्यविरुहाति । 10 A दक्षिणो । 11 A D यस्तुं; C न्यस्तं । 12-13 C स्थैण्धूल । 14 A मस्तः; B D भतः । 15 B °दार्थ°; C वृर्थ° । 16 C बुधः । 17 A यदा । 18 A निहस्त; C हुरुक । 19 A संग्रामं; C संग्रामो । 20 A विहत्य । 21 A भनुभतोनयः; B तान् स्तोनयोः; C स्तलीनयो । 22 A राज्ञी; C राष्ट्र । 23 C °वर्णाणां । 24 A missing. 25 B D °जनपदानां; C राजपदानां । 26 B क्षत्रिया । 27 B कोचित्र । 28 B राजा° । 29 A तदा । 30-31 A बुधोदभासः; 31 B रुणस्या स्या; D रणस्ये स्या । 32 A दुर्व्वेगो; B दुर्भगः; C रुत्वरोति । 33 B D पारस्तवान्; C परस्तवा । 34-36 A D तिष्ठेद्यदा । 37 C रेक्षः । 38 B D कल°; C करल° । 39-41 A B D स्तदा चित्रनाशयेत् । 42 C शिल्पिनौ । 43 C कुशलान् । 44 C बधनं । 45 C भूयः । 46 B दारुकांसो; C दारुकाणो । 47 B वधेत् । * In this Ms. this st. and the following one are not found. 48 B पयोस्करः; C बुधेत् । 49 A पातो । 50 B D कोशि° । 51 A B वदेत् । † In A B D this first half is thus found with some unimportant varints:—वैश्याश्च शिल्पिनश्चापि षण्मासं पर्व सारथिः । D ज्वरो भयः । 52 C भयं° । 53 A श्रेयः । 54 A पुष्यः । 55 A B D जले । 56 A B D बुधः । 57 C मित्रदेवं । 58-60 C पितृवना विशापांश्च ।

बुधो विवर्णो मध्येन विशाखां यदि गच्छति । ब्रह्म-क्षत्रविनाशाय तदा ज्ञेयो न संशयः ॥[1] २८
मासो[2]दितोऽनु[3]राधायां यदा सौम्यो निषेवते[4] । मूकान्ध[5]-बधिरा[7]श्चैव[8] तदा पीडयते भृशम् ॥ २९
श्रवणे[10] राज्य[11]विभ्रंशो[12] ब्राह्मे[13] ब्राह्मण[14]पीडनम् । धनिष्ठायां च वैवर्ण्य[15] धनं हन्ति धनेश्वरम् ॥ ३०
उत्तराणि[16] च पूर्वाणि[17] याम्यायां[18] यदि हिंसति । धातु[19]वादविदो हन्यां[20]स्तज्ज्ञांश्च[21] परिपीडयेत् ॥ ३१
ज्येष्ठायां[22]मनुपूर्वेण[23] स्वातौ च यदि तिष्ठति । बुधस्य चरितं घोरं महाजनिकमुच्यते ॥ ३२
उत्तरे[24] श्रवणयो.[25] सौम्यो[26] यदा दृश्येत पृष्ठतः । पितृदेवमनुप्राप्तस्तदा मासमुपग्रहः[27] ॥ ३३
पुरस्तात् सह शुक्रेण यदि तिष्ठति सुप्रभः । बुधो विसृजते[28] काले[29] तदा मेघा[न्][30]बहूदकान् [कालं][31] ॥ ३४
दक्षिणेन[32] तु[33] पार्श्वेन[34] यदा गच्छति दुःप्रभः । तदा सृजति लोकस्य शोक[35] महद्[36]भयङ्क[37]रः ॥ ३५
धनिष्ठायां जलं[38] हन्ति वारुणे[39] जलजं वधेत्[40] । वर्णहीनो यदा याति बुधो दक्षिणतस्तदा ॥ ३६

तनुः[41] समार्गो[42] यदि सुप्रभोऽजितः समप्रसन्नो गतिमार्गतोऽश्रितम्[43] ।
यदा न रूक्षो न च दूरगो बुधस्तदा प्रजानां सुखमर्घ्य[44]मन्तं[45] सृजेत् ॥ ३७

## इति नैर्ग्रन्थे भद्रबाहुके निमित्ते बुधचारो नाम अष्टादशोऽध्यायः ॥

चार[47] प्रवास वर्णं च दीप्ति[48] काष्ठं गतिं फलम् । वक्रानुवक्र[49]नामानि लोहितस्य निबोधत ॥ १
चारेण विंशतिं मासानष्टौ वक्रेण[50] लोहितः । चत्वारस्तु प्रवासेन समचारेण[51] गच्छति ॥ २
अनृजुः[52] परुषः[53] श्यामो ज्वलितो धूमवान्[54] शिखी[55] । विवर्णो वामगो व्यस्तः[56] क्रुद्धो ज्ञेयः सदाऽशुभः ॥ ३
यदाऽष्टौ[57] सप्त मासान् वा दीप्तः पुष्टः प्रदीप्तिः । तदा सृजति कल्याणं शस्त्रमूर्च्छां[61] तु निर्दिशेत् ॥ ४
मन्ददीप्तश्च दृश्येत यदा भौमो न तेजवान् । तदा नानाविधं दुःखं प्रजानामहितं सृजेत् ॥ ५
ताम्रो दक्षिणकाष्ठस्थः प्रशस्तो दस्युनाशनः । ताम्रो यदोत्तरे काष्ठे तस्य दस्यु (स्यो:) तदा हितम् ॥ ६
रोहिणीं स्यात् परिक्रम्य लोहितो दक्षिण[67] व्रजेत् । सुरा सुराणां[68] मार्गाणां सर्वेषामभयं[69] वदेत् ॥ ७
क्षत्रियाणां विपादश्च दस्यूनां शस्त्रविभ्रमः । गावो[70] गोष्ठ-संमुद्राश्च विनश्यन्ति विचेतसः ॥ ८
स्पृशेल्लिखेत् प्रमर्देद् वा रोहिणीं यदि लोहितः । तिष्ठते दक्षिणो वाऽपि तदा शोक-भयङ्करः ॥ ९
सर्वेद्वाराणि दृश्यो[74]ऽसौ[75] निलम्ब यदि गच्छति । स च लोकहितो ज्ञेयो दक्षिणोऽसृग्[78] लोहितः ॥ १०

1 A °क्षेत्रे, B D °क्षेत्र° । 2-3 C मास स्थिर° । 4 B D न सेवते । 5-8 A B D पङ्गुधनवर्त्ता धान्य । 9 A नृणाम् । 10 A श्रमणे, C श्रावणे । 11 A B D राज । 12 A °विध्वस, B D °विभ्रम । 13 B ब्रह्मे; C ब्राह्मे । 14 C ब्राह्मण° । 15 A B D वैवर्णे । 16 B उत्तराणां । 17 B पूर्वाणाम् । 18 A B याम्य च, C वायव्य । 19 A धात,° C धातुः । 20 A B D धान्य । 21 A C D तज्ज्ञा । 22 A ज्येष्ठाम् । 23 A अतिपूर्वेण, C मथ पूर्वेषु । 24-26 C उत्तराया वा सौम्येन । 27 A B D अपग्रह । 28-29 A B D मध्यशरीरे च । 30-31 C मेघा च दूषकान् । 32 A दक्षिणे । 33 A तनुपार्श्वेन । 34 C मार्गेण । 35-36-37 B महाशोकमहद्भयम्, C D सानय तद्भयकर ॥ 38 C धन । 39 B वारुणे; C वरुणे । 40 C वदेत् । 41 B तनु, C तथा । 42 C सुमार्गे । 43 C °आश्रित । 44 C सत । 45 A धूर्जित । 46 A ध्रुवम्; B व्रजेत् । 47 A वार । 48 2 B D दीप्ता । 49 B वक्रानु [illegible] । 50 A चक्रेण । 51 C समाचारात । 52 A अमृजु, C अन्त्यज । 53 A B C पुरुष । 54 C धूम्रवान् । 55 B सती । 56 A धान, [illegible] स्थान, D व्यातु । 57 A B D यदा । 58 C सदा स्वष्टौ । 59 A not found, C मद । 60 B प्रज्ञ° । 61-62 B शस्त्रमूर्छति । * A This st is missing in this Ms 63-64 B D चदेत वा । 65-66 C तदाद्गता । 67 A दक्षिणाम् । 68 C सुराणाम् । 69 B D अभय, C महर्घ । 70-71 B गवोष्ठ°; °C काष्ठा । 72 A सीदा, B D आसीत् स । 73 C पूर्व° । 74-75 C सर्वाणि । 76-77 C सर्व° । 78 A मृज°; B °सृज, D असृज । 78-79 C विवर्णो हित ।

पञ्च वक्राणि[1] भौमस्य तानि भेदेन द्वादश । उष्णं शोषमुखं व्यालं लोहितं लोहमुद्गरम् ॥ ११
उदयात् सप्तमे ऋक्षे नवमे वाऽष्टमेऽपि वा । यदा[2] भौमो निवर्तेत तदुष्णं वक्रमुच्यते ॥ १२
सु(अ)वृष्टिः[3] प्रबला[4] ज्ञेया विष-कीटा-ग्नि-मूर्च्छनम् । ज्वरो जनक्षयो वाऽपि तज्जातां[5] (तस्य)विनाशनम् ॥ १३
एकादशे यदा भौमो द्वादशे दशमेऽपि वा । *निवर्तेत तदा वक्रं[6] तच्छोषमुखमुच्यते ॥ १४
अपो[7]ऽन्तरिक्षात्[8] पतितं दूषयति[9] तदा[10] रसान्[11] । ते सृजन्ति रसान् दुष्टान् नानाव्याधींस्तु भूतजान्[12] ॥ १५
शुष्यन्ति[13] तडागानि सरांसि सरितस्तथा । बीजं न रोहते तत्र जलमध्येऽपि वापितम्[14] ॥ १६
त्रयोदशे[15]ऽपि[16] नक्षत्रे यदि वाऽपि चतुर्दशे[17] । निवर्तेत यदा[18] भौमस्तद्[19] वक्रं व्यालमुच्यते ॥ १७
पतङ्गाः सविषाः कीटाः सर्पा जायन्ति तामसाः । फलं[20] न[21] बध्यते[22] पुष्पे बीजमुप्तं[23] न रोहति ॥ १८
यदा पञ्चदशे ऋक्षे[24] षोडशे वा निवर्तते । †लोहितो लोहितं वक्रं[25] कुरुते गुणजं तदा ॥ १९
देश-लोहा-श्मसां[26] लोपं[27] (पो) राज्यभेदश्च[28] जायते । सङ्ग्रामाश्चात्र वर्तन्ते मांस-शोणित-कर्दमाः ॥ २०
यदा सप्तदशे ऋक्षे पुनरष्टादशेऽपि वा । प्रजापतिर्निवर्तेत तद् वक्रं लोहमुद्गरम् ॥ २१
निर्दया निरनुक्रोशा लोहमुद्गरसंनिभाः । प्रणयन्ति नृपा दण्डं क्षीयन्ते येन[29] तत्प्रजाः ॥ २२
धर्मा-र्थ-कामा हीयन्ते[30] विलीयन्ते[31] च दस्युभिः[32] । तोय-धान्यानि शुष्यन्ति रोगमारी बलीयसी ॥ २३
वक्रं[33] कृत्वा यदा भौमो विलम्बेत[34] गतिं प्रति । वक्रा-नुवक्रयो[35]र्घोरं मरणाय समीहति ॥ २४
कृत्तिकादीनि सप्तेह वक्रेणा[36]ङ्गारक[37]श्चरेत् । हत्वा वा दक्षिणस्तिष्ठेत् तत्र वक्ष्यामि यत् फलम् ॥ २५
साल्वांश्च सारदण्डांश्च विप्रान् क्षत्रांश्च पीडयेत् । मेखलांश्च त्रयो[38] घोरं तदा[39] प्राप्नो[40]तिसंशयम्[41] ॥ २६
मघादीनि च सप्तैव यदा वक्रेण[42] लोहितः । चरेद्[43] विवर्ण[44]स्तिष्ठेद् वा तदा विन्द्या[45]न्महद्भयम् ॥ २७
सौराष्ट्र-सिन्धु-सौवीरान् प्रासीलान्[46](?) द्राविडा[47]नेनाम्[48] ।
पाञ्चालान् सौरसेनान् वा बाल्हीकाम् नकुलान् वधेत् ॥ २८
मेरलान् वाऽप्यावन्त्यांश्च पार्वतांश्च नृपैः सह । जिघांसन्ति तदा भौमो ब्रह्म-क्षत्रं (त्रान्) विरोधयेत् ॥ २९
मैत्रादीनि च सप्तैव यदा सेवेत[49] लोहितः । वक्रेण[50] वाऽपगत्या वा महतामेनयं[51] वदेत्[52] ॥ ३०
राजानश्च विरुध्यन्ते चातुर्वर्णो[54] विलुप्यते । कुरु-पाञ्चालदेशानां मूर्च्छति[55] च[56] भयानि च ॥ ३१
धनिष्ठादीनि सप्तैव यदा वक्रेण लोहितः । सेवेत कुद्वगत्या वा तदाऽपि स जुगुप्सितः ॥ ३२

---

1 A वक्राणि । 2 A यादि । 3 B D सुवृष्टिः; C अनावृष्टिः । 4 B D स्प्रप्रबला, C तु प्रबला । 5 C तज्जातं । * C In place of this second half the first half, as it is, is repeated in this Ms. 6 A वक्रं । 7–8 B आपोन्तरिक्षाद्; C D आपः । 9 A C दूषयति । 10 A यदा । 11 A D रसम्; C रसः । 12 A तु जाम्; C भूमिजान्; D भूसुजाम् । 13 A सुशान्ते । 14 C रोपितम् । 15–16 C त्रयोदशेन । 17 C चतुर्भुजे । 18 A B D तदा । 19 A B D तुद. । 20–21 B फलेन । 22 B बध्यतः । 23 A उक्तं, B उत्तं । 24 A missing in this Ms. † C This second half and the following first half of the stanza are missing in this Ms. 25 A वाक्रम् । 26 D °श्मशो । 27 A D लोपान् । 28 A सपतेद्ः । 29 A B जेन, C तेन । 30 C हीने च । 31 C क्षीयते । 32 C तदा दावः । 33 A वक्रं । 34 C विलम्बेन । 35 A B D वक्रानुवक्रं तं । 36 A चक्रेणो । 37 A गौरकः । 38 A D क्रन्यो°; B त्रादयोः । 39–41 B D मरणाय समीहते (D समीहति) । 42 A चक्रेय । 43 C चरते । 44 C वर्णे । 45 B निषेद्या । 46 C प्रासीदं; D प्रासीलान् । 47 A B D द्रमिडा° । 48 A °नगाम्, C °त्रयं; D °ननमान् । 49 C यत्रेग । 50 A चक्रेन । 51–53 C तन्महान्धभयं भवेत् । 54 A B D °र्वणो । 55 A सच्छन्ते; C मुर्च्छनम् । 56 A तद् ।

घनिनो जलजीवांश्च[1] तथा[2] चैव[3] हयान् गजान् । उदीच्यान् नाविकांश्चापि पीडयेल्लोहितस्तदा ॥ ३३
भौमो वक्रेण युद्धे[4] वा यां वीथीं[5] चरते[6] हि[7] सः[8] । तेषां भयं विजानीयाद् येषां ते प्रतिपुद्गलाः ॥ ३४
क्रूरः क्रुद्धश्च भ्रमणो[9] यदि तिष्ठेद् ग्रहैः सह । परचक्रागमं विन्द्यात् तासु नक्षत्रवीथिषु ॥ ३५
धान्यं तदा न विक्रेयं संश्रयेच्च बलीयसम्[10] । त्रिंशु[11]तुल्याणि[12] दुर्गाणि च समाश्रयेत् ॥ ३६
उत्तराफाल्गुनीं भौमो यदा[14] लिखति[15] वामतः । यदि वा दक्षिणं गच्छेत् धान्यस्यार्घो[17] महान्[18] भवेत् ॥ ३७
यदाऽनुराधां प्रविशेन्मध्ये[19] न[20] च[21] लिखेत्[22]तथा[23] । मध्यमं तं विजानीयात् तदा भौमं[25]विपर्यये[26] ॥ ३८

स्थूलः सुवर्णो द्युतिमांश्च पीतो रक्तः सुमार्गश्च सुखी प्रजानाम् ।
कान्तः प्रसन्नः समगो विलम्बी भौमः प्रशस्तः सुखदः प्रजानाम् ॥ ३९

## इति निर्ग्रन्थभद्रबाहुके निमित्ते अङ्गारकचारो नाम एकोनविंशोऽध्यायः ॥

राहुचारं प्रवक्ष्यामि क्षेमाय[27] च[28] सुखाय[29] च । द्वादशाङ्गविद्भिः प्रोक्तं निर्ग्रन्थैस्तत्त्ववेदिभिः[30] ॥ १
श्वेतो रक्तश्च पीतश्च विवर्णः कृष्ण एव च । ब्राह्मण-क्षत्र-वैश्यानां विजाति-शूद्रयोर्मतः[31] ॥ २
षण्मासैः प्रकृ[33]तिर्ज्ञेया[34] ग्रहणं वार्षिकं भयम् । *त्रयोदशानां मासानां पुररोधं समादिशेत् ॥ ३
चतुर्दशानां मासानां विद्याद् वाहनजं भयम् । अथ पञ्चदशे मासे बालानां[38] मरणमादिशेत्[37] ॥ ४
षोडशानां तु मासानां महामात्रिभयं वदेत् । अष्टादशानां मासानां विन्द्याद् राष्ट्रस्ततो[40] भयम् ॥ ५
एकोनविंशकं[41] पञ्चविंशं[42] कृत्वा नृपं वधेत् । अतः परं च यत् सर्वं विद्यात् तत्र कलिं[48] भुवि ॥ ६
पञ्चसंवत्सरं घोरं चन्द्रस्य ग्रहणं परम् । विग्रहं तु परं विद्यात् सूर्यस्यैदशवार्षिकम् ॥ ७
यदा प्रतिपदि चन्द्रः प्रकला विकृतो भवेत् । अर्धं भिन्नो[51] विवर्णो वा तदा ज्ञेयो महागमः ॥ ८
लिखेद् रश्मिभिर्भूयो वा यदाऽऽच्छादयेत भास्करः । पूर्वकालेन[53] सन्ध्यायां ज्ञेयो राहुसदागमः ॥ ९
पशु-व्याल-पिशाचानां सर्वतोऽपरदक्षिणम् । तुल्यान्यभाणि यातोल्के[55] यदा राहुः(होस्)तदाऽऽगमः ॥ १०
संध्यायां तु यदा शीतं अपरेसा(शा)सनं ततः (?) । सूर्यः पाण्डुश्चला भूमिस्तदा ज्ञेयो महागमः ॥ ११
सरांसि सरितो वृक्षा यद्यो गुल्म-लतावनम् । †सस्याश्चबले वृक्षा(?)राहु (होः) र्यस्तदाऽऽगमः ॥ १२
छादयेच्चन्द्र-सूर्यौ च यदा मेघाः सिताम्बरे । सन्ध्यायां च[58] तदा[59] ज्ञेयं[60] राहोरागमनं[62] ध्रुवम्[63] ॥ १३
एतान्येव तु लिङ्गानि भयं[64] कुर्युरपर्वणि[66] । वर्षासु वर्षदानि स्युर्भद्रबाहुवचो यथा ॥ १४

1 A °भिजाश्च; B °विप्राश्च, D °विप्राश्च । 2-3 A ह्रस्वं सत्वं, B धूर्तं मर्त्यं; D धूर्वं मर्यं । 4 C युद्धः । 5 A पृथिवीं°; C भूमिं° । 6 C भुंक्ते । 7-8 A B D हित° । 9 C भ्रकुटः । 10 C बलीयसान् । 11 A B D विजानीयात् । 12 A ध्रुव; B ध्रुवं, D ध्रुवं । 13 A धान्यं; B D धान्ये । 14-15-16 C यदा वर्णं लिखेत् त्रिधा । 17 A °भयः; B °भय°; D सर्वः । 18 A B महान् । 19-24 A B D प्रविशेवांतेन वा लिखेत । 25 A भौमे । 26 A विपर्ययः । 27-28 A विजयाय । 28-29 B सुखावहम् । 30 C °दर्शिभिः । 31 A मीतम्; B D मतम् । 32 A D मासान् । 33 A D प्रकृत° । 34 A D ज्ञेय° । * C This second half and the first half of the following st. are not found in this Ms. 35-37 C पुररोधं च समादिशेत् । 38 A B D °मन्त्र° । 39 A राजः । 39-40 C राजपुत्रः । 41 C एकोनविंशति । 42 C सर्वे । 43-44 C विंशकं वा । 45 C वधः । 46-48 A वहिनोति कला°, B वकिनोति; D वकिनोति कली । 49 C पूर्वयोः । 50-51 A अनभिन्ने; B अनभिन्नः; D अन भिन्नः । 52 C सर्वे° । 53 A D °कालम । 54 B C D तदा । † C D सरांसि सरितो वृक्षान् वल्ली-गुल्म लतावनम् ॥ १० ॥ । 55 A वीथोल्का । 56 A missing in this Ms. ‡ This and the next st. are missing in this Ms. 57 A याम्य । 58-60 C उदये चैव । 61-63 C तदा ज्ञेयो महागमः । 64-66 C भयरूपाणि पर्वणि । 67 C वर्षाणि ।

शुक्लपक्षे द्वितीयायां सोमशृङ्गं[1] यदा(ऽ)शुभम् । स्फुटिताग्रं द्विधा चाऽपि विन्द्याद् राहु(हो)स्तदाऽऽगमम्[3] ॥ १५
चन्द्रस्य चोत्तरा कोटी द्विशृङ्गं दृश्यते यदा । धूम्रो[4] विवर्णो ज्वलितस्तदा राहोर्ध्रुवागमः ॥ १६
उदयास्तमने भूयो यदा पश्चोदयोरवौ[5][6] । इन्द्रो वा यदि[7] दृश्येत[8] तदा ज्ञेयो ग्रहागमः ॥ १७
कबन्ध[9]-परिघा-मेघा धूम-रक्त[10]पटे-ध्वजाः । उद्गच्छमाने दृश्यन्ते सूर्ये राहोस्तदाऽऽगमः ॥ १८
कबन्धो[11] महिषाकारः शकटस्थो[13] यदा शशी । उद्गच्छन् दृश्यतेऽष्टम्यां तदा ज्ञेयो ग्रहागमः ॥ १९
सिंह-मेघो-धूम्रसंकाशः परिवेषो यदा शशी । अष्टम्यां शुक्लपक्षस्य[14] तदा ज्ञेयो ग्रहागमः ॥ २०
श्वेतके सरसंकाशे रक्त-पीतोऽष्टमो[15] यदि[16] । यदा चन्द्रः प्रदृश्येत तदा ब्रूयाद् ग्रहागमः ॥ २१
उत्तरतो दिशः श्वेतैः[17] पूर्वतो रक्तकेसरैः । दक्षिणतो[18]ऽथ[19] पीताभैः[20] प्रतीच्यां कृष्णकेसरः ॥ २२
यदि[21] गच्छन् गृहीतोऽपि क्षिप्रं चन्द्रः प्रमुच्यते । परिविष्टो[22] दिनं[23] चन्द्रे विमर्दैत्[24] विमुञ्चति[25] ॥ २३
द्वितीयायां यदा चन्द्रः श्वेतवर्णः प्रकाशते । उद्गच्छमानः सोमो[26] वा[27] तदा गृह्येत राहुणा ॥ २४
तृतीयायां[28] यदा सोमो विवर्णो दृश्यते यदि[29] । पूर्वरात्रे तदा राहुः पौर्णमास्यामुपक्रमेत्[30] ॥ २५
अष्टम्यां तु यदा चन्द्रो दृश्यते रुधिरप्रभः । पौर्णमास्यां तदा राहुरर्धरात्रमुपक्रमेत् ॥ २६
नवम्यां तु यदा चन्द्रः परिवेश्यै[31] तु[32] सुप्रभैः[33] । अर्धरात्रमुपक्रम्य तदा राहुरुपक्रमेत् ॥ २७
कृष्णप्रभो[34] यदा सोमो दशम्यां परिविष्यते । पश्चाद् रात्रं तदा राहुः सोमं गृह्णात्यसंशयः ॥ २८
*अष्टम्यां तु यदा सोमं श्वेताभ्रं[35] परिवेषते । सर्वां[36] परिघं[37] वै राहुर्विमुञ्चति न संशयः ॥ २९
कनकाभो यदाऽष्टम्यां परिवेषेण[38] चन्द्रमाः[39] । अर्धग्रासं[40] तदा कृत्वा[41] राहुरुद्गिरते पुनः ॥ ३०
परिवेषो[42]द्वयो[43]ऽष्टम्यां[44] चन्द्रमा रुधिरप्रभः । सर्वग्रासं तदा कृत्वा राहुश्चन्द्रं[45][46] विमुञ्चति[47] ॥ ३१
†रक्तपीता यदा कोटिर्दक्षिणः स्याद्ग्रहः सितः । पीता यदाऽष्टम्यां कोटी तदा श्वेतं ग्रहं वदेत् ॥ ३२
दक्षिणा मेचकाभा तु कपोतग्रहमादिशेत् । ‡कपोतमेचकाभा तु कोटी ग्रहमुपानयेत् ॥ ३३
रक्तोत्तरा[48] सितकोटिर्दक्षिणा[49] स्याद्[50] यदाष्टमी । कपोतग्रह[51]माप्स्याति[52] पूर्वपश्चात्[53] सितप्रभम् ॥ ३४
¶पीतोत्तरा यदा कोटिर्दक्षिणो रुधिरप्रभः । कपोतग्रहणं विन्द्याद् ग्रहं पश्चात् सितप्रभम् ॥ ३५
यतोऽभ्रस्तनितं विन्द्यात् मारुतं करकाशनी । रुतं वा श्रूयते किञ्चित् तदा विन्द्याद् महागमम् ॥ ३६
मन्दक्षीरी[54] यदा वृक्षाः सर्वदिक् कलुषा भवेत् । क्रीडते च यतो बालस्ततो विन्द्याद् महागमम् ॥ ३७
ऊर्ध्वं प्रस्पंदते चन्द्रश्चित्रः संपरिवेष्यते । कुरुते मण्डलं[55] स्पष्टं[56]स्तदा विन्द्याद् महागमम् ॥ ३८

---

1 B C D प्रभम् । 2–3 A राहुवशो यथा । 4 B दृश्यते; C दृश्यन्ते । 5 A B D पश्चादयो । 6 C रवे । 7 A B D यदा । 8 C वा दृश्येत् । 9 A B कमं च, D कमं च । 10 B रज°; C रक्त°; D रक्त । 11 C यथा । 12 A B D भार्गवान् । 13 A B D शकटं वा । 14 C शुक्लपक्षस्य । 15 A B अष्टमी । 15–16 C सितोऽष्टमी । 17 A B D श्वेतः । 18–20 C दक्षिणो मध्यपीताभः । 21 C उदयं । 22–23 C परिविष्टामृतं । 23 A दिनः । 24 B विमर्दैन; D विमर्दोन । 24–25 A परिवेश्यासुरप्रभः । 26–27 A श्वेतो वै । 28 C द्वितीयायाम् । 29 A प्रभः; C पुनः । 30 C पूर्वमास्याम् । 31–33 A परिवेश्यासुरप्रभः । 34 C °प्रदः । * A this st. is not found in this ms. 35 C श्वेतता । 36–37 C यदा वै परिलीढं । 38 A चन्द्रमाः । 39 A रुधिरप्रभः । 40 A B D °रात्रं । 41 A B D गत्वा । 42–44 C यदाष्टम्यां परिविष्टः । 45–47 C पुनरुद्गिरते गृहाः; 45–46 B जं चं; D जं च । † C This st. is preceded by the following st. in this Ms.–परिविष्यते यदाऽष्टम्यां चन्द्रमाः कृष्णसन्निभः । सर्वग्रासं तदा सोमो राजं क्षीणं विमुञ्चति ॥ This and the following st. are numbered as 35–36 in this Ms. ‡ C कपोतमेचकाहंसककोग्रहमुपानयेत् । 48 B D रक्तोऽन्तरा । 49–50 A B D दक्षिणस्य । 51 C ग्रहणं । 52 C विंद्यात् । 53 C ग्रह° । ¶ C This st. is not found in this Ms. 54 B °क्षाराः । 55–56 A मण्डलस्फोटे ।

यतो विपयघातश्चायनयः पशु-पक्षिण[1] । तिष्ठन्ति मण्डलायन्ते ततो विन्द्याद् ग्रहागमम् ॥ ३९
पाण्डुर्वा द्रावलीढो वा चन्द्रमा यदि दृश्यते । व्यथितो हीनरश्मिश्च यदा तत्त्वे[2] निवेशनम् ॥ ४०
*यतः प्रबध्यते वेपस्ततो विन्द्याद् ग्रहागमम् । यतो वा मुच्यते वेपस्ततश्चन्द्रो विमुच्यते ॥ ४१
†गृहीतो विध्यते चन्द्रो वेपमावेव(?) विध्यते । यदा तदा विजानीयात् पण्मासाद्ग्रहणं[8] पुनः[9] ॥ ४२
प्रत्युतमुत्समादित्य यदा गृह्येत चन्द्रमा । भयं तदा विजानीयात् ब्राह्मणानामुपस्थितम्[3-5] ॥ ४३
‡अतरात्रे यदा सोमो गृह्यते राहुणाऽऽवृतः । भयं तदा विजानीयादमात्यानां विशेषतः ॥ ४४
मध्याह्ने तु यदा चन्द्रो गृह्यते कनकप्रभः । क्षत्रियाणां नृपाणां च तदा भयमुपस्थितम् ॥ ४५
व्यावृत्ते यदि मध्याह्ने राहुणा गृह्यते शशी । भयं तदा विजानीयात् वैश्यानां समुपस्थितम् ॥ ४६
नीचैर्वावलनी[10][11] सोमस्तु यदा गृह्येत राहुणा । सूर्पाकार[12] तदाऽऽनर्त[13] मरुकच्छं च पीडयेत् ॥ ४७
§अल्पचन्द्र[14] च द्वीपाश्च म्लेच्छाः पूर्वापरा द्विजाः । दीक्षिता क्षत्रियामात्याः शूद्राः पीडामवाप्नुयुः ॥ ४८
यतो राहुर्ग्रसेच्चन्द्रं ततो यात्रा[18] निवेशयेत्[19] । वृत्ते निवर्तते[20] यात्रां यतो[22] तस्मान्महद् भयम् ॥ ४९
गृह्णीयादेकमासेन चन्द्र-सूर्यौ यदा सदा । रुधिर[25]वर्ण[26]ससर्का[27] सङ्ग्रामे जायते मही ॥ ५०
चौराश्च यायिनो म्लेच्छा घ्नन्ति साधूननायकान्[28] । विरुध्यन्ते[29] गणाश्चापि नृपाश्च विपमे चराः ॥ ५१
¶पूर्वे[33] हतु[34] यदा हत्वा राहुर्निष्क्रमते शशी । रूक्षो वा हीनरश्मिर्वा पूर्वो[37] राजा विनश्यति ॥ ५२
दक्षिणाभेदने गर्भं दाक्षिणात्याश्च पीडयेत् । अपराभेदने चैवं नाविकांश्च जिघांसति ॥ ५३
निश्चलः सुप्रभः कान्तो यदा निर्याति चन्द्रमाः । राज्ञो विजय-लाभाय तदा ज्ञेयः शिवङ्करः ॥ ५४
एतान्येव तु लिङ्गानि सूर्ये[38] ज्ञेयानि धीमता । कृष्णपक्षे यदा चन्द्रः शुभो वा यदि वाऽशुभः ॥ ५५
उत्पाताश्च निमित्तानि शकुन-लक्षणानि च । पर्वकाले यदा सन्ति तदा राहोर्भुयागमः ॥ ५६
रक्तो राहुः शशी सूर्यो हन्युः क्षत्रान् सितो द्विजान् । पीतो वैश्यान् तमः[41] शूद्रान् द्विवर्णस्तु जिघांसति ॥ ५७
चन्द्रमाः पीडितो हन्ति नक्षत्रं यस्य यद्यतः । रूक्षः पापनिमित्तश्च विकृतैश्च विनिर्गतः[46] ॥ ५८
प्रसन्नः साधुकान्तश्च दृश्यते[48] सुप्रभः शशी । यदा तदा नृपान् हन्ति प्रजाः पीवः सुवर्षसः[51] ॥ ५९
राज्ञो राहुः प्रवासे यानि लिङ्गान्यस्य पर्वणि । यदा गच्छेत् प्रशस्तो वा राजा राष्ट्रविनाशनः ॥ ६०

1 C तो । 2 C निपेवणम् । * C This second half is missing in this. Moreover this st is followed by the following st – ऊर्ध्वं प्रसंवृते चन्द्रो रूक्षो माली च दीक्षते । यदा तदा विजानीयात् पण्मासाद् ग्रहण पुन ॥ † C This st is not found in this ms 3–5 A ब्राह्मणानामुपस्थितम् । 6–7 A B प्रयुतम तमादित्य, C प्रत्ययस्तमनादित्ये । 8–9 A पण्मासाद्ग्रहण पुन, C दस्युनांशामुपस्थितम् । ‡ C this and the next st are missing in this Ms 10 C दिना° । 11 C °वलग्ने । § C सूर्यो ग्रहराजनका यत्रां तरुक्त च प्रपीड्यते । 12 B सूर्याकारे । 13 C अल्पामद्रे च । 14–15 C पर्वतरानिता । 16 C चन्द्रा । 17 C अत्रप्यायान् । 18 C रात्रौ । 19 C निवेद्येत । 20 C निवृत्ते । 21 C यात्राया । 22–23 C तस्मात्तु । 24 C ग्रहः । 25–27 C तदा रुधिरससक्ता । 28 A D मनायकम् । C सनायकम् । 29 A निरुध्यन्ति । 30 C रणे । 31 A विसयमुचरा, B D विपयमुचरा । ¶ B D This st is preceded by the following st in these Mss –यतोत्साह (D यतोत्सह) तु हित्वा तु राहु निष्क्रमते शशी । तदा क्षेम सुभिक्ष च मद्ररोगांश्च निर्दिशेत् ॥ । 32–34 A यतोत्सि, 32–35 C यदोत्सर्ग हतु भित्वा, 33 D पूर्व, 35 D हित्वा । 36 C हतो । 37 C श्रेष्ठो । 38 A B D स्थान् । 39 C राहोः । 40 B C सर्व° । 41 A B D कृष्ण । 42 C D विवर्णः । 43 A B D विजानिशु । 44 A पपत, C मद्रयेत् । 45 A विकृतिः, C पीतः । 46 C विनिवर्तते । 47 C °कान्तो । 48 A B C सुस्यते । 49 C सुभदः । 50 C प्राज्ञः । 51 B C सुवर्षेत, D सपसर्वः ।

यतो राहुप्रमथने[1] ततो यात्रा न सिध्यति । प्रशस्ताः शकुना यत्र सुनिमित्ता सुयोजिताः ॥ ६१
राहुश्च चन्द्रश्च तथैव सूर्यो यदा सवर्णा न परस्परघ्नाः ।
काले च राहुर्भजते रवीन्दू तदा सुभिक्षं विजयश्च राज्ञः ॥ ६२

## इति नैर्ग्रन्थे भद्रबाहुके निमित्ते विंशोऽध्यायः ॥

कौणजान् पापसंभूतान् केतून् वक्ष्यामि ज्योतिषि ।
मृदवो दारुणाश्चैव तेसामासं (समासेन) निबोधत ॥ १
एकादिषु शतान्तेषु वर्षेषु[11] च विशेषतः । केतवः संभवन्त्येवं विषमाः पूर्वपापजाः ॥ २
पूर्वलिङ्गानि केतूनामुत्पाताः सदृशाः पुनः । गृहात्समनान्ताश्च दृश्यन्ते[17] चापि[18] लक्षयेत् ॥ ३
शतानि चैव केतूनां प्रवक्ष्यामि पृथक् पृथक् । उत्पाता यादृशा उक्ता ग्रहात्समनान्यपि ॥ ४
अन्यस्मिन् केतुभवने[21] यदा केतुश्च दृश्यते । तदा जनपदव्यूहः प्रोक्तान् देशान् स हिंसति ॥ ५
एवं दक्षिणतो विन्द्यादपरेणोत्तरेण च । कृत्तिकादियमान्तेषु नक्षत्रेषु यथाक्रमम् ॥ ६
धूम्रः क्षुद्रश्च यो ज्ञेयः केतुरंगारकोऽग्निपः । प्राणसंत्रासयत्राणी स प्राणीसंक्षयस्तथा ॥ ७
त्रिशिराके द्विजभयं वरुणे[26] युद्धमुच्यते । अरश्मिके[27] नृपापायो विरुध्यन्ते परस्परम् ॥ ८
विष्विले[28] विक्षिलं सर्वं खिली[29] सर्वपराजयम् । शुद्रे शुद्रीवधं पापः कबन्धे जनमृत्युदः ॥ ९
रोगं (गो) सस्यविनाशश्च दुःकालो मृत्युविद्रवः । मांस-लोहितकं ज्ञेयं फलमेवं च पंचधा ॥ १०
मानुषः[31] पशु-पक्षीणां समयस्तापसक्षयी । विपाणी[32] दंष्ट्रिघाताय सर्वंघाताय शङ्करः ॥ ११
अङ्गारकोऽग्निसंकाशो धूमकेतुस्तु धूमवान् । नालीसंस्थानसंस्थानो वैडूर्यसदृशप्रभः ॥ १२
कनकाभा शिखा यस्य स केतुः कनकः स्मृतः । यस्योर्ध्वगा शिखा शुक्ला स केतुः शुक्ल उच्यते ॥ १३
त्रिवर्णश्चन्द्रवद् वृत्तः समसत्वं च दङ्कुरः(?) । त्रिभिः शिरोभिः शि(त्रि)शिरो गुल्मकेतुश्च गुल्मवत् ॥ १४
विकान्तस्य शिखे दीप्ते ऊर्ध्वगे च प्रकीर्तिते । ऊर्ध्वमुण्डा शिखा यस्य स खिली[36] केतुरुच्यते ॥ १५
शिखे विषाणवद् यस्य स विषाणी प्रकीर्तितः । व्युच्छिन्नभासो भीतेन रुक्षौ च क्षिलिका शिखा ॥ १६
शिखाश्रयतो ग्रीवार्धं कबन्धस्य विधीयते । एकैररश्मिः प्रदीप्तस्तु स केतुर्दति उच्यते ॥ १७
शिखा मण्डलवद् यस्य स केतुर्मण्डली स्मृतः । मयूरपक्षी विज्ञेयो[38] हसनैः प्रभयाऽल्पया ॥ १८

1 C प्रतपते; D °प्रथमने । 2 C प्रशान्ताः । 3 A B D सुयोषितः । 4 A यस्य रमाः । 5 C कठिजान् । 6 C केचित् । 7 A B D मृतवः । 8 C अरुणाः । 9-10 A B D समासाई सदन्यथा । * C This is missing. 11 A वर्णेषु । 12 A D सर्वपापदाः; D पूर्वपापदाः । † C In this Ms. the following st. is found in its place.—धूमाद्याः श्वेतपर्यन्ताः वर्णाभिविषयाणि च । केतवः खे समुत्पन्ना पीडयन्ति दिशं शुभाम् ॥ । 13-15 B प्रवक्ष्यामि पृथक् पृथक् । 14-15 C प्रहृणा य च । 16 B उत्पाताश्चादृशा उक्ता; C उदयात्समने चापि । 17-19 B ग्रहात्स्थावनवाचपि; ग्रहाणां लिङ्गये क्षयेत् । ‡ B C not found. 20-21 C प्राङ्गारके भवे यस्मिन् । 21 C °समति । 22 C सप्तनक्षत्रे । 23-25 C अंगारश्चाग्निजं भयम् । § C कनकप्रमाणसंत्रासी अलीसः अरश्मिके प्राणसंक्षयम् ॥ 26 C वारुण्ये । 27 A B D रश्मिकेतु । 28 B विलिखे; C विलिपः । 29 A B खिली । 30 C तु महद्भयम् । ¶ C संग्रामाश्च प्रवर्तन्ते मांसशोणितकर्दमाः । 31 C मनुष्य° । 32 C विषाणं । 33 A यशः; B D यस्य° । 34 B शंकरः; C शंदृच । 35 B D भद्रो । $ C त्रिवर्णा क्रौंचपोतकः महाकेतुः महाद्युतिः । द्विशिरः द्विशिरः स्यादु गुल्मश्चैव तु गुल्मवान् ॥ ‖ C This and the next three lines are not found in this Ms. so that the second half of the 17th stanza forms the second half of the 15th st. 36 B खली । 37 B सूक्ष्मा । ** A B D एकस्मिश्च प्रदीप्तो वा सेसमरोहिताः शुभाः ॥ 38 D संस्थाने । 39 C हसनस्य । 40 C प्रभावया ।

